

आयुर्वेदीयग्रन्थमाला ।

चतुर्दशं पञ्चदशं च पुष्पम् ।

श्रीमहादेवविरचितव्याख्यया सहिता

वैद्यवरश्रीबिन्दुविरचिता

# रसपद्धतिः ।

तथा

श्रीसुरेश्वरविरचितं

# लोहसर्वस्वम् ।

संशोधकः प्रकाशकश्च ।

आचार्योपाह्वत्रिविक्रमात्मजो यादवशर्मा ।



वि. सं. १९८१. सन १९२५.

मूल्यं सार्धरूप्यकः ।



# निवेदनम् ।

रसपद्धतिनामायं ग्रन्थो भिषग्वरेण बिन्दुना विरचित इति, अस्य ग्रन्थस्य प्रथमश्लोकादेव प्रतीयते । ग्रन्थेऽस्मिन् रससंस्काराः, धातूपधातुमहारसोपरसरत्नोपरत्नादीनां परिचयनिर्णयसंशोधनमारणादयः, अन्यग्रन्थेष्वनुपलभ्यमाना बहवो रसयोगाश्चातिविशदतया सहृदयमनोहरैर्विविधवृत्तोपनिबद्धैः श्लोकैरुपवर्णिताः सन्ति । ग्रन्थस्यास्योपरि वैद्यवरमहादेवविरचिता व्याख्याऽप्युपलब्धाऽस्माभिः । सोऽयं महादेवो बिन्दुतनय इति बिकानेरराजकीयपुस्तकालयाल्लब्धे पुस्तके समाप्तौ लिखितं दृश्यते । टीकायां चात्र बहवो विषया मूलेऽनुक्ता ग्रन्थान्तरादुद्धृत्योपनिबद्धाः सन्ति । सोऽयं महादेवो महाराष्ट्रदेशनिवासीति ज्ञायते, दशमश्लोकव्याख्यायां 'क्षमाशिग्रुः महाराष्ट्रदेशे शिग्रुमूलान्येवातितीक्ष्णानि भवन्ति, तस्य नाम शिग्रमूलमिति प्रसिद्धिः' इति व्याख्यानात्, अन्यत्र भेषजद्रव्याणां महाराष्ट्रभाषाप्रसिद्धपर्यायनामदानाच्च । आयुर्वेदप्रकाशे रसकामधेनौ च बहूनि पद्यानि रसपद्धतेरुद्धृतानि दृश्यन्ते । अतोऽयं ग्रन्थस्ततः प्राचीन इत्यनुमीयते । ग्रन्थस्यास्य संशोधनार्थमादर्शपुस्तकत्रयमुपलब्धम् । प्रथमं नासिकक्षेत्रस्थानामस्मत्परमसुहृदां वैद्यवर्य**कृष्णशास्त्री देवधर** इत्येतेषां सकाशाल्लब्धं, द्वितीयं पुण्यपत्तनस्थभाण्डारकरप्राच्यसंशोधनालयाल्लब्धं, तृतीयं बिकानेरराजकीयपुस्तकालयात्प्राप्तं, पुस्तकत्रयमप्येतदशुद्धिबहुलं मध्ये मध्ये खण्डितपाठं च । तदेतत्पुस्तकत्रयसहायेन ग्रन्थस्यास्य संशोधने यथामति कृतो यत्नः । तथाऽपि भ्रमप्रमादादिवशाज्जातं स्खलनमुपलभ्येत चेत् सुधीभिः संशोधनीयम् । रसपद्धतेः संशोधनावसरे एव मुंबईनगरस्थरॉयलएशियाटिकसोसायटीपुस्तकालयात् श्रीसुरेश्वरविरचितलोहसर्वस्वस्याप्येकं पुस्तकं प्रायः शुद्धं प्राप्तमस्माभिः । ग्रन्थेऽस्मिन् सुवर्ण–लोहाभ्रसत्त्व–ताम्रेति चतुर्विधलोहानां शोधनं मारणं प्रयोगाश्चातिविशदतयोपवर्णिताः सन्ति । ग्रन्थान्तरेष्वनुक्ता बहवो लोहयोगाश्चात्रोक्ताः सन्ति । अतोऽयं ग्रन्थो भिषजां चिकित्सायामुपयुक्तो भविष्यतीति रसपद्धतेः सहैवायमपि प्रसिद्धिं नीत इति

भिषजामनुचरस्य

**यादवशर्मणः ।**



# रसपद्धत्या विषयानुक्रमणिका

# लोहसर्वस्वस्य विषयानुक्रमणिका ।

# रसपद्धत्याः पाठसंशोधनम् ।

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| वासितम् | वापितम् | १९ | ८ |
| पुटे भस्मनी | पुटैर्भस्मनी | १९ | २३ |
| तुल्यतुलया लेलीतपिष्ट्यापुन० | तुल्यबलिना जम्भाम्बुपिष्टेन च | २३ | २५ |
| त्रिःक्षारैः | त्रिक्षारैः | २४ | ५ |
| शुल्मं | शूलं | २५ | ४ |
| प्राक्प्रक्रियोपाहृतं | प्राक्प्रक्रियोत्पादितं | ,, | २० |
| ०यवान्यामपि | ०यवान्या अपि | २६ | २८ |
| च | चे | २० | १३ |
| ओलीढेषु | रूप्याद्येषु | २७ | २३ |
| ०रुपक्षिप्तोऽस्ति दोषो | ०रुपक्षिप्तोऽस्त्यपक्के | ,, | ,, |
| प्रोक्तः प्राकृतवैकृतेषु तु मया शेषेष्वपक्केषु च | ताम्रं चापि विषार्तिहृन्निगदितं वैद्यैरपक्कं खलु | ,, | २४ |
| अत्र | एतदनन्तरं | २७ | २९ |
| पाठान्तरमुपलभ्यते तदेव समीचीनमिति भाति | पाठोऽधिक उपलभ्यते | | |
| दग्धाः | पक्काः | ,, | ३० |
| साम्भि करञ्जतैलनिहितं | पूतिकरञ्जतैलनिहितं | ३५ | २५ |
| शोणितबन्धु | शोणितबिन्दु | ३६ | १५ |
| विषापहं | विषद्वय० | ,, | १८ |
| लघु कोल० | लघुकोल० | ,, | २० |
| ०ऽऽम्लजम्बीरकम् | ०ऽम्लजम्बीरकम् | ४४ | २६ |
| चिह्नममलं | चिह्नमखिलं | ४५ | २५ |
| ०र्ह्यतिसृत्यां | ०र्ह्यतीसृत्यां | ७७ | १८ |
| | | १० | १८ |

३४ तमे पृष्ठे १३ पङ्क्त्यनन्तरमायुर्वेदप्रकाशे 'वृष्यौ दोषहरौ बुधैर्निगदितौ माक्षीकमूस्युद्भवौ' इत्यधिकः पाठ उपलभ्यते ।

## लोहसर्वस्वस्य पाठसंशोधनम् ।

| अपपाठः | सुपाठः | पृ. | पं. |
|---|---|---|---|
| लोहासिद्धिः | लोहसिद्धिः | ७ | १४ |
| कृताञ्जलिः स्वाङ्ग० | कृताञ्जलिस्वाङ्ग० | १४ | २४ |
| ०मघुना० | ०मधुना० | २८ | ४ |



श्रीमहादेवविरचितव्याख्यासहिता

श्रीविन्दुपण्डितविरचिता

# रसपद्धतिः ।

शिवां प्रणम्य शिरसा शास्त्रसारं विभाव्य हि ।
भिषग्वरो महादेवो व्याख्याति रसपद्धतिम् ॥ १ ॥
मुरली नवरसखुरली यस्य च वंशः स्वरत्रयीवंशः ।
करणं कविताभरणं शरणं करवाणि तन्महस्तरुणम् ॥ २ ॥

प्रत्यूहव्यूहव्यपोहहेतुस्वेष्टदेवताप्रणामपूर्वकं रसपद्धतिरूपं ग्रन्थं प्रतिजानीते—

**नत्वा निष्कपटं निरञ्जनधिया निर्विघ्नमीशप्रिया-**
**मायुर्वेदविदां मुदे सुभिषजामेषा मया विन्दुना ।**
**ग्रन्थेभ्यः परिगृह्य सारमखिलं सूत्रैश्चिकित्सासखी**
**वृक्षेभ्यः स्रगिव प्रसूननिचयैः संग्रथ्यते पद्धतिः ॥ १ ॥**

**टी०**—नत्वेत्यादि । विन्दुना मया सुभिषजां मुदे रसपद्धतिः संग्रथ्यत इत्यन्वयः । विन्दुः पण्डितः, "ज्ञाता तु विदुरो विन्दुः" इत्यमरः । ज्ञात्रा मया, अपरं विन्दुपण्डितनाम्ना, अतिनिपुणा ये भिषजस्तेषां मुदे तेषां प्रीतये, पद्धतिः रसविद्यारूपः प्रसिद्धो मार्गः, संग्रथ्यते वाक्यरचनारूपेण रच्यत इत्यर्थः; तथा च रसपद्धतिनामको ग्रन्थ इति सिद्धम् । ग्रन्थस्यास्य स्वकपोलकल्पितत्वशङ्कां निराकर्तुमाह—ग्रन्थेभ्य इति ।—ग्रन्थाः सप्तविंशतिसंख्याकरसशास्त्रप्रणेतृकर्तृकाः, तेभ्यः सारं निसृष्टार्थजातं,अखिलं न न्यूनातिरिक्तं, परिगृह्य ज्ञात्वेत्यर्थः । कैः रच्यत इत्यत आह—सूत्रैरिति ।—सूत्रणात्सूत्राणि तैः, वाक्यैरिति यावत् । अत्र समुचितदृष्टान्तमाह—वृक्षेभ्य इति । यथा वृक्षेभ्यः प्रसूननिचयं संगृह्य, सूत्रैः स्रक् संग्रथ्यते; स्रक् माला, निचयशब्दः प्रभूतार्थत्वं द्योतयति । कीदृशी ? चिकित्सासखी, चिकित्सैव सखी यस्याः सा । इदं च विशेषणमभिधेयत्वप्रतिपादनार्थम् । 'मार्गे हि सखी अवश्यं भवति, इति लोकोक्तिः । किं कृत्वा ? ईशप्रियां नत्वा; ईशेन युक्ता प्रिया ईशप्रिया, अर्धनारीनटेश्वरं नत्वा नमस्कृत्य; यद्यपि ईशस्य प्रिया ईशप्रियेतीशस्याप्राधान्यं भवति तथाऽपि 'न शिवेन विना शक्तिः' इत्यागमात् मध्यमप-

१ 'अन्यूनानतिरिक्तं' इति पा० । २ 'सूचनात्' इति पा० ।

द्लोपीसमास आश्रीयते, तत्र च न प्राधान्याप्राधान्ये विवक्षिते इति न विरोधः। निष्कपटमिति क्रियाविशेषणम्। सैव सर्वदा साक्षितया हृदये परिस्फुरतीति ध्वन्यते। कया? निरञ्जनधिया, अञ्जनं रजस्तमोभ्यां संवलनं, तस्मान्निर्गतधियेत्यर्थः। एवं च रागद्वेषविनिर्मुक्तशुद्धसत्त्वधिया सर्वदा भावनमेव नमनम्। क्त्वाप्रत्ययेन भावनस्य ग्रन्थात्पूर्वकालत्वं द्योत्यते। निर्विघ्नमिति विघ्नाभावमित्यर्थः। क्रियाविशेषणे तु विघ्नाभावक्रियायां वैशिष्ट्यं न प्रतिपादयति। न च निपुणानां सर्वेषामपीयमुपयोगाय भवेदिति चेत्तत्राह—आयुर्वेदविदामिति। अष्टाङ्गहृदयवेदिनामित्यर्थः। एतेनैतदुक्तं—अष्टाङ्गहृदयवेदिनामेवात्राधिकारो न तु यादृशतादृशाम्॥ १॥

इदानीं चिकित्सासखीत्युक्तं तत्र चिकित्सां विभजते—

**सा दैवी प्रथमा सुसंकृतरसैर्या निर्मिता सद्रसै-**
**श्चूर्णस्नेहकषायलेहरचिता स्यान्मानवी मध्यमा।**
**शस्त्रच्छेदनलास्यलक्ष्मणकृताचाराधमा साऽऽसुरी-**
**त्यायुर्वेदरहस्यमेतदखिलं तिस्रश्चिकित्सा मताः॥ २॥**

**टी०**—सुसंस्कृतरसैः सद्रसैर्या निर्मिता सा दैवी, सा प्रथमा। सद्रसाः ज्वराङ्कुशादयः। सुसंस्कृताः शुद्धिभस्मसत्त्वद्रुत्यादिभिः कर्मभिः, रसाः रसोपरसमहारससाधारणलोहमण्यादयो विद्यन्ते येषु ते, तैः। दैवी देवैर्महेश्वरादिभिरचिन्त्यप्रभावैर्योगिभिर्निर्मिता कथिता; सा प्रथमा उत्तमेत्यर्थः। मध्यमामाह—चूर्णस्नेहकषायलेहरचिता कथिता या सा मानवी; सा मध्यमा। चूर्णं क्षुण्णं द्रव्यं; स्नेहो घृततैलादिः; कषायो जलं, तेन च स्वरसादयो ग्राह्याः; लेहो गुडादिनिर्मितः पाकः, तेन गुटिकाऽपि संगृहीता; तै रचिता कृता या सा मानवी मनुष्यप्रोक्ता, सा मध्यमा न न्यूना नोत्तमा। हीनामाह—शस्त्रेत्यादि—शस्त्रच्छेदनलास्यलक्ष्मणकृताचाराधमा सा आसुरी सा अधमेत्यन्वयः। शस्त्राणि षड्विंशतिसंख्यानि तैः कृतानि छेदनादीनि कर्माणि तान्येव लास्यलक्ष्मणानि तैः कृतः आचारो यस्याः सा; आसुरी असुरैः प्रोक्ता शल्यतन्त्रविषया, सा चाधमा नीचेत्यर्थः। इति तिस्रश्चिकित्साः। एतदखिलमायुर्वेदरहस्यं तात्पर्यविषयीभूतं गोप्यमित्यर्थः॥ २॥

इदानीमुद्देशसंगतिं द्योतयन् दैवीं चिकित्सां प्रतिजानीते—

**तत्रादावभिधीयते बहुविधा दैवी चिकित्साऽत्र च**
**प्राक्सत्पारदकर्म साङ्गममलं पश्चाच्च ते ते रसाः।**

**मुख्यत्वाद्रसकर्मणि प्रियतया पृथ्वीपतीनां तथा**
**सम्यक्सर्वरसैककारणतयाऽप्यभ्यर्हितत्वादपि ॥ ३ ॥**

**टी०**—तासु, आदौ प्रथमतः। अभिधीयते उच्यते। बहुविधा नानाप्रकारका। चिकित्सा व्याधिप्रतीकारः। अत्रैव च दैवीचिकित्सायां प्राक्पारदकर्माभिधीयत इत्यन्वयः। पारदानात्पारदः, तस्य कर्म संस्काराः, ते चाष्टादश, तेषु प्रधानत्वादष्टौ संस्कारा अभिधीयन्ते। कीदृशं? साङ्गं, अङ्गानि यन्त्रौषधादिरचनाः, तैः सह वर्तमानं कर्म। अमलं निर्दूषणम्। चः समुच्चये तेन तदुपयोगिमहारसोपरससाधारणरसलोहादीनां शुद्ध्यादिकर्म समुच्चीयते। पश्चाच्च ते ते रसाः राजमृगाङ्कादयः निरूप्यन्ते। अत्र संगतिमाह—मुख्यत्वादिति। रसस्य शुद्धस्य सर्वोपयोगित्वात्, 'अशुद्धो मारयति' इति वचनाच्च। एतेन फलोपधानं प्रतिपादितम्। रसकर्मणि पारदशोधनादौ पारदस्य मुख्यत्वात्, तेन न पौनरुक्त्यम्। द्वितीयहेतुमाह—पृथ्वीपतीनामित्यादि। राज्ञां प्रियत्वात्; एतेन कामपुरुषार्थसंपादकत्वेन भिषजोऽर्थसिद्धिश्च द्योतिता। हेत्वन्तरमाह—तथेति। सर्वे रसा वक्ष्यमाणास्तेषामसाधारणकारणत्वेनाभ्यर्हितत्वात्। तेन यागादिवद्रसकर्मणोऽवश्यकर्तव्यत्वं प्रतिपादितम्। अत एवोक्तम्,—"रसबन्ध एव धन्यः प्रारम्भे यस्य सततमितिकरुणा। सिद्धे रसे करिष्ये महीमहं निर्जरामरणाम्॥ मूर्छित्वा हरति रुजं बन्धनमनुभूय मुक्तिदो भवति। अमरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात्"—इति। उपसंहारे चोक्तम्,—"तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम्। दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात्"—इति। "सिद्धे रसे करिष्यामि निर्दारिद्र्यमिदं जगत्" इत्यादिफलश्रवणात् तत्र सर्वदा यतनीयम् ॥ ३ ॥

रसस्वरूपमाह—

**श्यामोऽन्तर्बहिरुज्ज्वलः किल रसः सप्तात्र दोषा अमी**
**नागो वङ्गविषौ मलश्चपलता वह्निर्गिरेर्जन्मजाः।**
**गण्डश्वित्रकमृत्युवान्तिचलतासन्तापजाड्यादय-**
**श्चैतेभ्यः क्रमशो भवन्ति विविधा रोगा दुराराधनाः॥ ४॥**

**टी०**—बहिरुज्ज्वल इति स्वरूपकथनम्। किलेति श्रूयते, तेन आख्यायिका सूचिता। सा चेत्थम्—परस्परजयाशया प्रीत्या प्रवृत्तयोः शिवयोः संभोगात्त्रैलोक्यस्य क्षोभः समभवत्, तन्निवारणार्थं तत्र वह्निः कपोतरूपेणाविरासीत्, तं दृष्ट्वा लज्जितः शम्भुस्तस्माद्विनिवृत्तः, तेन स्खलितो धातुश्चरमः, तं पाणिना गृहीत्वा वह्निमुखे दत्तः, ततस्तं सोढुमशक्तो वह्निर्गङ्गायामपातयत्, तयाऽपि बहिरुत्क्षिप्तः,

तेन कृत्वा शतयोजननिम्नाः पञ्चकूपा जाता गङ्गायास्तीरे, तत्संबद्धायां गिरिभुवि तन्मलाधानात् यत्र तत्र धातवो जाताः, ते पञ्चकूपाः सर्वेषामुपयोगित्वात्सर्वे गिरितुल्या जाताः, त्रयः कूपा देवैः शिवस्य प्रार्थनया शिवेनैव शप्ताः । एककूपस्थ ईषत्पीतः रूक्षाङ्गः दोषयुक्तः दशाष्टसंस्कृतिसिद्धो देहलोहकरः; अन्योऽपि मिश्रकः अत्यन्तचपलः श्वेतः सोऽपि संस्कृतः सर्वरोगहरो भवति; तौ द्वौ प्रचरदवस्थौ, अन्ये त्वसत्कल्पाः । एतदनन्तरं तौ इन्द्रप्रार्थनया रुद्रेण कञ्चुकादिदोषैश्चाभिशप्तौ कृतौ । तेनासंस्कृतात्सिद्धिर्नास्ति । तस्य पञ्चगतयः—जलगा वायुगा मलगा धूमगा च, एता दृश्याश्चतस्रो गतयः, अन्या च गतिर्जीववत् सूक्ष्मत्वेन केनापि नोपलभ्यते, सा पञ्चमी । अतोऽत्यन्तचपलस्य तस्य संस्कारः अतिनैपुण्येन मन्त्रध्यानादिना च कर्तव्यः । इममर्थं मनसि निधाय संक्षेपतो वक्तुं दोषानाह—अत्रेति । अत्र रसेऽमी वक्ष्यमाणाः सप्त दोषाः । तानेवाह—नाग इत्यादि । नागदोषो वङ्गदोषो विषदोषो मलदोषश्चपलतादोषो वह्निदोषो गिरिदोषश्च । क्रमेण तेषां व्याधिकर्तृत्वमाह—गण्ड इत्यादि । नागदोषाद्गण्डः इत्यादिक्रमेण तेभ्यो दोषेभ्यो व्याधयो भवन्ति । दुराराधना दुःखेनोपचरितुं शक्या इत्यर्थः । अत्रेयं कल्पना—नागवङ्गौ यौगिकौ दोषौ, चलताविषवह्निमलजाश्च दोषा नैसर्गिकाः, गिरिभूमिजाश्चौपाधिकाः । एवं भूमिजाः कुष्ठं कुर्वन्ति, गिरिजा जाड्यं कुर्वते, वारिजा वातादिसंघातम् । अन्ये तु भूगिरिजलनागवङ्गसंमिश्रणजाः सप्त कञ्चुकाः कथयन्ति ॥ ४ ॥

तस्मान्निपुणैः सहायैः सर्वोपकरणानि संपाद्य सर्वकर्मारम्भः कार्य इति प्रतिपादयितुं रसस्य संस्कारानुद्दिशति—

**स्वेदो मर्दनमूर्च्छनोत्थिति ततः पातोऽपि भेदान्वितो**
**रोधः संयमनं प्रदीपनमिति स्पष्टाऽष्टधा संस्कृतिः ।**
**अस्याः सर्वरसोपयोगिकतया त्वन्या न विन्यस्यते**
**ग्रन्थेऽस्मिन्प्रकृतोपयोगविरहाद्विस्तारभीत्याऽथवा ॥ ५ ॥**

**टी०**—स्वेदः स्वेदनम् । तदुक्तम्,—"क्षाराम्लैरौषधैर्वापि दोलायन्त्रे स्थितस्य हि । पाचनं स्वेदनाख्यं स्यान्मलशैथिल्यकारकम् "—इति । दोलायन्त्रं तु वक्ष्यते । पाकस्तु कुत्रचित्त्रिदिनं कुत्रचिदेकदिनंमनवच्छेदेन कार्यः । मर्दनं खल्वे दत्त्वा यत्पेषणम् "उद्दिष्टैरौषधैः सार्धं सर्वाम्लैः काञ्जिकैरपि । पेषणं मर्दनाख्यं स्याद्बहिर्मलविनाशनम् "—इति । मूर्च्छनं मर्दनविशेषेणैव मूर्च्छोत्पादनम् । "मर्दना-

१ एकदिनमित्यस्याग्रे 'केचित् दीप्ताग्निना एकप्रहरं, मध्याग्निना प्रहरद्वयं, मन्दाग्निना प्रहरचतुष्टयं पचेत्; एवं वासरे एकवारं स्वेदनं कार्यमिति वदन्ति' इत्यधिकः पाठः क्वचिदुपलभ्यते ।

दिष्टभैषज्यैर्नष्टपिष्टककारकम् । तन्मूर्च्छनं हि वार्यद्रिभूजकञ्चुकनाशनम्”— इति । भूजकञ्चुको भूदोषः । “स्वरूपस्य विनाशेन पिष्टत्वापादनं हि यत् । विह्नद्भिर्जितसूतोऽसौ नष्टपिष्टः स उच्यते”— इति । उत्थितिरुत्थापनम् । “स्वेदपातादियोगेन स्वरूपापादनं हि यत् । तदुत्थापनमित्युक्तं मूर्च्छाव्यापत्तिनाशनम्”— इति । तत अवधित्वे पञ्चमी । भेदान्वितः ऊर्ध्वाधस्तिर्यग्भेदेन पातस्त्रिविधः । “उक्तौषधैर्मर्दितपारदस्य यन्त्रस्थितस्योर्ध्वमधश्च तिर्यक् । निर्यापणं पातनसंज्ञमुक्तं वङ्गाहिसंपर्कजकञ्चुकघ्नम्”— इति । रो(बो)धः कुम्भमध्ये रोधनम् । तदुक्तम्,—“जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम् । स्थितिराप्यायनी कुम्भे याऽसौ रोधनमुच्यते”— इति । संयमनम्—“रोधनाल्लब्धवीर्यस्य चपलत्वनिवृत्तये । क्रियते पारदे[1] स्वेदः प्रोक्तं नियमनं हि तत्”—इति । प्रदीपनं स्वेदनविशेषः । “धातुपाषाणमूलाद्यैः[2] संयुक्तो घटमध्यगः । ग्रासार्थं त्रिदिनं स्वेद्यो दीपनं तन्मतं बुधैः”—इति । इत्यष्टधा संस्कृतिः संस्काराः । आसां प्रधानत्वमाह—अस्या इत्यादि । अस्मिन्ग्रन्थे अन्या न विन्यस्यते अन्ये संस्कारा अत्र नोच्यन्ते, जात्यभिप्रायेणैकवचनम् । कुतः ? प्रकृतोपयोगविरहात् अथवा विस्तारभयेन । तर्हि इयमपि न कर्तव्येत्यत आह-अस्या इति । रसभस्मादौ सर्वत्रोपयोगात् । अत्र वैद्यानां बोधार्थमनुक्तमप्युच्यते । “इयन्मानस्य सूतस्य भोज्यद्रव्यात्मिका मितिः । इयतीत्युच्यते याऽसौ ग्रासमानभितीरितम्”—इति । ग्रासमानं नाम संस्कारः । “ग्रासस्य चारणं गर्भद्रावणं जारणं तथा । इति त्रिरूपा निर्दिष्टा जारणा वरवार्तिकैः”–इति जारणासंस्कारः । “ग्रासः पिण्डः परीणामस्तिस्रश्चाख्या परा पुनः” । तत्र चारणा द्विविधा । “समुखा निर्मुखा चेति चारणा द्विविधा पुनः । निर्मुखा चारणा प्रोक्ता बीजदानेन भागतः ॥ शुद्धं स्वर्णं च रूप्यं च बीजमित्यभिधीयते । चतुःषष्ट्यंशतो बीजप्रक्षेपो मुखमुच्यते ॥ एवं कृते रसो ग्रासलोलुपो मुखवान्भवेत् । कठिनान्यपि लोहानि क्षमो भवति भक्षितुम् ॥ इयं हि समुखा प्रोक्ता जारणा मृगचारिणा । दिव्यौषधिसमायोगात् स्थितः प्रकटकोष्ठिषु ॥ भुञ्जीताखिललोहाद्यं योऽसौ राक्षसवक्त्रवान् । इयं हि निर्मुखा प्रोक्ता जारणा वरवार्तिकैः । रसस्य जठरे ग्रासक्षेपणं चारणा मता ॥ ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता । बहिरेव द्रुतीकृत्य घनसत्त्वादिकं खलु ॥ जारणाय रसेन्द्रस्य सा बाह्या द्रुतिरुच्यते” । इति द्रावणस्य लक्षणद्वयं प्रतिपादितम् । द्रुतिलक्षणं तु,—“निर्लेपत्वं द्रुतत्वं च तेजस्त्वं लघुता तथा ॥ असंयोगश्च सूतेन पञ्चधा द्रुतिलक्षणम् ॥ औषधाध्मानयोगेन लोहधात्वादिकं तथा । संतिष्ठते द्रवाकारं सा द्रुतिः परिकीर्तिता ॥ द्रुतग्रासपरीणामो बिडयन्त्रादियोगतः । जारणेत्युच्यते तस्याः प्रकाराः संति कोटिशः”—इति जारणालक्षणम् । “क्षारैर-

---

१ ‘यो घटे’ इति पा०. । २ ‘धातुवापनमूलाद्यैः’ इति पा०. ।

म्लैश्च गन्धाद्यैर्मूत्रैश्च पटुभिस्तथा । रसग्रासस्य जीर्णार्थं तद्बिडं परिकीर्तितम्"—इति बिडलक्षणम् । "सुसिद्धबीजधात्वादिजारणेन रसस्य हि । पीतादिरागजननं रञ्जनं परिकीर्तितम्"—इति रञ्जनलक्षणम् । "सूते सतैलयन्त्रस्थे स्वर्णादिक्षेपणं हि यत् । वेधाधिक्यकरं लोहे सारणा सा प्रकीर्तिता" इति सारणालक्षणम् । "व्यवायिभेषजोपेतो द्रव्ये क्षिप्तो रसः खलु । वेध इत्युच्यते तज्ज्ञैः स चानेकविधः स्मृतः ॥ लेपः क्षेपश्च कुन्तश्च धूमाख्यः शब्दसंज्ञितः । लेपेन कुरुते लोहं स्वर्णं वा रजतं तथा ॥ लेपवेधः स विज्ञेयः पुटमत्र च सौकरम् । प्रक्षेपणं द्रुते लोहे वेधः स्यात्क्षेपसंज्ञितः ॥ संदंशधृतसूतेन द्रुतद्रव्याहतिश्च या । सुवर्णत्वादिकरणं कुन्तवेधः स उच्यते ॥ वह्नौ धूमायमानेऽन्तः प्रक्षिप्तरसधूमतः । स्वर्णरूप्यत्वजननं धूमवेध इतीरितः ॥ मुखस्थितरसेनाल्पलोहस्य धमनात्खलु । स्वर्णरूप्यत्वजननं शब्दवेध इतीरितः"—इति । अथोद्घाटनं "सिद्धद्रव्यस्य सूतेन कालुष्यादिनिवारणम् । प्रकाशनं च वर्णस्य तदुद्घाटनमीरितम् ॥ क्षाराम्लैरौषधैः सार्धं भाण्डं रुद्ध्वाऽतियत्नतः । भूमौ निखन्यते यत्नात्स्वेदनं परिकीर्तितम् ॥ रसौषधस्य युक्तस्य भाण्डरुद्धस्य यत्नतः । सदाऽग्नियुतचुल्ल्यन्तः क्षेपः संन्यास उच्यते ॥ द्वावेतौ स्वेदसंन्यासौ रसराजस्य निश्चितम् । गुणप्रभावजनकौ शीघ्रव्याप्तिकरौ तथा"—इति । क्रामणाख्योऽपि संस्कारो ज्ञेयः । एवमष्टादश संस्कारा ज्ञेयाः । मूलकृता तु एते असंभवितत्वशङ्कया नोक्ता इति ज्ञेयम् । अथ परिभाषां वक्तुं रसशालादिप्रक्रिया संक्षेपत उच्यते । तत्र क्रमेण विना शास्त्रं नास्ति, शास्त्रोदितक्रमेण विना इतिकर्तव्यताऽपि नास्ति, इति शास्त्रं क्रमश्चावश्यं ज्ञेयः । स च गुर्वधीनः । गुरुश्च सकलशास्त्रार्थाभिज्ञः देवदेव्योर्भक्तः मन्त्रसिद्धः कुशलः धैर्यादिगुणवान् सर्वदा देवताराधनपरः । तेन शिष्योऽपि परीक्ष्यः—असूयादिदोषरहितः गुरुभक्तः कुलीनः शुचिः; तादृशा एव परिचारकाः संपादनीयाः । ततो धर्मराज्ये निरातङ्के देशे चतुर्द्वारोपशोभिता शाला कार्या । तत्र वेदीं कृत्वा, तस्यां स्वस्तिकाद्यलङ्कारयुक्तायां सुमुहूर्ते सर्ववादित्रयुक्ते सुमङ्गले रसलिङ्गं प्रतिष्ठापयेत् । निष्कत्रयं सुवर्णस्य नवनिष्कं शुद्धपारदं निम्बूरसेनैकदिनं मर्दयित्वा नवनीतप्रायेण सुन्दरां लिङ्गघटनां कृत्वा जम्बीरमध्ये स्थापयित्वा आरनालेन दोलायन्त्रे पचेत् । तल्लिङ्गपूजनस्य कोटिलिङ्गपूजनसमं फलं, ब्रह्महत्यादिमहापातकघ्नं, महदैश्वर्यप्रदं च ज्ञेयम् । तस्य पूजा तु अघोरमन्त्रराजेन । तद्ध्यानम्,—'अष्टादशभुजं शुभ्रं पञ्चवक्त्रं त्रिलोचनम् । प्रेतारूढं नीलकण्ठं' इति । तस्योत्सङ्गे एकवक्त्रां चतुर्भुजामक्षमालाङ्कुशपाशाभयान् दधतीं हेमाभां हेमवस्त्रां चिन्तयित्वा, वाङ्मयी श्रीकामराजशक्तिबीजैः सह रसाङ्कुशा या द्वादशाक्षरी विद्या, तया मन्त्रराजेन चोभयोरनेकोपचारैः पूजां कुर्यात् । नन्दीभृङ्गीमहाकालकुलीराः पूर्वादिचतुर्दिक्षु नाममन्त्रैः प्रणवादिनमोन्तैः

१ 'स्वर्णाद्यापादनं लोहे' इति पा० ।

पूजयेत् । पश्चाद्भैरव्याद्यष्टयोगिनीचक्रं यथासंप्रदायं पूजयेत् । पट्टशिष्यः स्वहस्तमस्तकयोगेनैकः कार्यः । एका कालिनी स्त्री साऽपि मन्त्राराधनार्थं संपादनीया तरुण्येव । एवं मन्त्राराधनं ताभ्यां कारणीयम् । तत्र षट्कोणमण्डले रसखल्वं स्थापयित्वा षट्कोणेषु वज्रवैक्रान्ताभ्रककान्तटङ्कणभूनागान्गन्धतालककासीसशिलाकङ्कुष्ठकांक्षीराजावर्तगैरिकानष्टदलेषु पूर्वादिक्रमेण पूजयित्वा रसकविमलताप्यतुत्थचपलाञ्जनहिङ्गुलसस्यकान् पत्राग्रेषु, स्वर्णं रौप्यं पूर्वद्वारे, ताम्रसीसकं दक्षिणद्वारे, वङ्गकान्तौ पश्चिमद्वारे, उत्तरे मुण्डतीक्ष्णकौ अघोरेण पूजयेत् । अत्र संभाराः संपादनीयाः—बिडकाञ्जिकक्षारमृल्लवणयन्त्राणि, कोष्ठीमूषावङ्कनालतुषाङ्गारवनोपलभस्त्रिकानलिकाः शिलाखल्वोलूखलमुसलानि स्वर्णताम्रलोहकारोपकरणानि सर्वाणि, समस्ततुलनानि, दिव्यौषधीवर्गरञ्जकवर्गस्नेहवर्गमूत्राण्यम्लफलानि सर्वाणि संग्राहयेत् । यद्यदुपयुक्तमन्यत्सर्वं तत्तद्देशेभ्यः संग्राहयेत् । गुरुभक्तिश्च सर्वदा कार्या । अथ परिभाषोच्यते—गन्धकाद्यैः समभागेन मर्दितो रसः कज्जलाभासः सा कज्जली, द्रवेण मर्दिता सैव पङ्कः, द्वादशभागपरिमितो रसस्तन्मध्ये गुञ्जाद्वयमात्रं गन्धकं निष्कार्धं वा दत्त्वा तीव्रघर्मे मर्दिता नवनीतरूपा पिष्टिर्भवति । सैव दुग्धयुक्तेन गन्धकेन मर्दिता अन्या पिष्टिर्भवति । एवं वङ्गादिष्वपि भवति । रसाच्चतुर्थांशसुवर्णेन मर्दिता पातनपिष्टिर्भवति, रूप्यसुवर्णयोः रसगन्धाभ्यां हतयोः बहुशः समुत्थितयोर्या कृष्टी सा हेमकृष्टी रजतकृष्टीत्युच्यते । सा च हेमकृष्टी सुवर्णमध्ये दत्ता तं न नाशयति रञ्जनं च करोति । तथा ताम्रं तीक्ष्णेन सह ध्मातं मिश्रितं सगन्धके लकुचाम्ले एकविंशतिवारं निक्षिप्तं वरलोहकं भवति । तेन रक्तीकृतं सुवर्णं हेमरक्तीत्युच्यते, द्रुतयोः स्वर्णतारयोर्निक्षिप्ता वर्णोत्कर्षकारिणी रञ्जनी च भवति; एवंताररक्ती कर्तव्या । मृतेन रसेन बद्धरसेन वाऽन्यलोहं साधितं सितं पीतं च भवति, तच्चन्द्रानलदलं ज्ञेयम् । माक्षिकेण ताम्रं हत्वा दशवारमुत्थाप्य तद्वन्नागमप्युत्थापितमुभयं चतुष्पलं नीलाञ्जनहतं कृत्वा पुनः सप्तवारमुत्थितं शुल्बनागं भवति । तेन साधितः पारदो गुटिकाकारो मेहवलीपलितादि हर्ता भवति । लोहान्तरे क्षिप्तं लोहं बहुधा ध्मातं निर्वापितं बहुशः यदा पाण्डुपीतप्रभं भवति तदा पिञ्जरीत्युच्यते । षोडश तारस्य भागाः, द्वादश ताम्रस्य, एकत्रावर्तिताश्चन्द्रार्कमित्युच्यते । त्रिंशत्पलमितं नागमर्कदुग्धेन मर्दितं सहस्रपुटैः यदा अर्धकर्षावशेषं भवति तदा नागसंभवश्चपलस्तस्य रजसा स्पृष्टमात्रः पारदः बद्धो भवति । एवमेव वङ्गस्यापि कार्यः । अन्याः परिभाषा यथाप्रकरणे उदाहरिष्यन्ते ॥ ५ ॥

स्वेदनादीन्यष्टौ प्रतिज्ञातानि, तत्र स्वेदनमाह—

**क्वाथे त्र्यूषणकन्यकानलवरामीनोरगाक्षीस्नुहां**
**क्वाथ्यादष्टगुणारनालमिलितं तत्षोडशांशीकृतम् ।**

**बद्ध्वा द्वित्रिपुटे पटे पटुतरं दोलाधिरूढं रसं**
**दोषोत्क्लेदकृते शनैस्त्रिदिवसं मृद्वग्निना स्वेदयेत् ॥ ६ ॥**

टी०—त्र्यूषणं शुण्ठीमरिचपिप्पल्यः, कन्यका कुमारी, अनलश्चित्रकः, वरा त्रिफला, मीनाक्षी मत्स्याक्षी, 'ब्राह्मी मीना तु मत्स्याक्षीत्य'मरः, बाम्बीति लोकाः, होनगोंदा इत्यपरे, उरगाक्षी सर्पाक्षी, 'नकुलेष्टा भुजङ्गाक्षी'त्यमरः, मुङ्गुसीकन्द इत्यपरे, स्नुक् स्नुही, 'स्नुक् स्त्री स्नुही गुडे'त्यमरः। एतेषां क्वाथे; एतानि समभागानि, 'कल्पयेत्सदृशान् भागान्प्रमाणं यत्र नोदितम्' इति वचनात्। क्वाथ्यादष्टगुणेति। क्वाथ्यंपलप्रमाणम्। तच्च पूर्वोक्तं सर्वमेव। 'क्वाथ्यद्रव्यपले कुर्यात्प्रस्थार्धं पादशेषितम्'इति वचनात्। अष्टगुणमारनालमिति आरनालं काञ्जिकम्। 'आरनालकसौवीरे'त्यमरः। तत्षोडशांशीकृतमिति तस्मात्पारदात्षोडशभागेन तुलितानां ओषधीनां विशेषणं, एतदेव वस्त्रे लेपयेत्। क्वाथश्च जलेन साध्यः। तत्रारनालप्रक्षेपः, अथवाऽऽरनालेनैव साधनं कुर्यात्। द्वित्रिपुट इति द्वित्रिवारं कृते पुटे, पटुतरं यथा भवति तथा दोलावत् हिन्दोलावदधिरूढं स्थापितं रसं, त्रिदिवसं मृद्वग्निना शनैः स्वेदयेत्। कस्मै? दोषोत्क्लेदकृते दोषोत्क्लेदनार्थम्। दोषाः कञ्चुकादयः पूर्वोक्ताः सप्त। स्वेदनं च दोलायन्त्रेण। तदुक्तम्,—"द्रवद्रव्येण भाण्डस्य पूरितार्धोदरस्य च। कण्ठस्योभयतो द्वारद्वयं कृत्वा प्रयत्नतः॥ तयोस्तु निक्षिपेद्दण्डं तन्मध्ये रसपोटलीम्। बद्ध्वा तु स्वेदयेदेतद्दोलायन्त्रमिति स्मृतम्"—इति। केचित् मर्दनपूर्वकं स्वेदनमिति वदन्ति। तन्न, विरोधात्। तदुक्तं रसरत्नाकरे,—'नानाधान्यैर्यथाप्राप्तैस्तुषवर्ज्यैर्जलान्वितैः। भाण्डार्धं पूरितं रक्षेद्यावदम्लत्वमाप्नुयात्॥ तन्मध्ये भृङ्गिकामुण्डी विष्णुक्रान्ता पुनर्नवा। मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी॥ त्रिफला गिरिकर्णी च हंसपादी च चित्रकम्। समूलकं कुट्टयित्वा यथालाभं निवेशयेत्॥ पूर्वाम्लभाण्डमध्ये तु धान्याम्लकमिदं भवेत्। स्वेदनादिषु सर्वत्र रसराजस्य योजयेत्॥ अत्यम्लमारनालं वा तदभावे नियोजयेत्"—इति। "त्र्यूषणं लवणं राजी रजनी त्रिफलाऽऽर्द्रकम्॥ महाबला नागबला मेघनादः पुनर्नवा। मेषशृङ्गी चित्रकं च नवसारं समं समम्॥ एतत्समस्तं व्यस्तं वा पूर्वाम्लेनैव पेषयेत्। तत्कल्कैर्वेष्टयेद्वस्त्रं यावदङ्गुलमात्रकम्॥ तन्मध्ये निक्षिपेत्सूतं बद्ध्वापट्टे दिनत्रयम्। दोलायन्त्रेऽम्लसंयुक्ते स्वेदितो जायते रसः"—इति स्वेदन विधिः॥ ६॥

मर्दनामाह—

**कल्याणेऽह्नि सुशिक्षितेन भिषजा खल्वे विशालेतरे**
**सुस्निग्धोपलजन्मनि त्रिदिवसं जम्भाम्भसा संभृतैः।**

ऊर्णाभस्मनिशानिशान्तवलभीधूमेष्टिकापांसुभिः
प्रत्येकं रसषोडशांशमिलितैर्मन्दं विमर्द्यो रसः ॥ ७ ॥

टी०—कल्याणेऽह्नि तिथिनक्षत्रवारकरणयोगशुद्धियुक्ते। सुशिक्षितेन गुरोः सम्यगभ्यस्तकर्मणा भिषजा वैद्येन मर्द्यः मर्दनीयो रस इति संबन्धः। मन्दमिति क्रियाविशेषणम्। क? खल्वे; खल्वोऽत्र पाषाणनिर्मितो लोहनिर्मितश्च। तदुक्तम्,—"उत्सेधेन दशाङ्गुलः खलु कलातुल्याङ्गुलायामवान् विस्तारेण दशाङ्गुलो मुनिमितैर्निम्नस्तथाऽधोङ्गुलैः। पाल्यां द्व्यङ्गुलविस्तरश्च मसृणोऽतीवार्धचन्द्रोपमो घर्षो द्वादशकाङ्गुलोऽत्र कथितः खल्वो मतः सिद्धये॥ लौहो नवाङ्गुलः खल्वो निम्नत्वे च षडङ्गुलः। मर्दकोऽष्टाङ्गुलश्चैव तप्तखल्वोऽभिधीयते॥ कृत्वा खल्वाकृतिं चुल्लीमङ्गारैः परिपूरिताम्। तस्यां निवेशितं खल्वं पार्श्वे भस्त्रिकया धमेत्॥ रसेन मर्दिता पिष्टिः क्षारैरम्लैश्च संयुता। प्रद्रवत्यतिवेगेन स्वेदिता नात्र संशयः॥ कृतः कान्तायसा सोऽयं भवेत्कोटिगुणोत्तरः"—इति। विशालेतरे द्वन्द्वैकवचनं कृत्वा खल्वविशेषणं, विशालो विस्तृतः, इतरो लघुः "अस्मिन् पञ्चपलः सूतो मर्दनीयो विशुद्धये। तत्तदौचित्ययोगेन खल्वेष्वन्येषु योजयेत्" इति वचनादुभयोरुपादानम्। सुस्निग्धेति। सुस्निग्धोपलाज्जन्म यस्य तस्मिन्। स्वरूपकथनं पाषाणघर्षणदोषनिवारणार्थम्। त्रिदिवसमिति अत्यन्तसंयोगे द्वितीया। जम्भाम्भसा निम्बुरसेन। 'स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः' इत्यमरः। संभृतैः संमिश्रितैरित्यर्थः। ऊर्णेति ऊर्णा मेषादिलोम, तस्य भस्म क्षारः, निशा हरिद्रा; निशान्तं गृहं तस्य वलभी गोपानसी तत्रत्यः धूमः 'विहिंसा' इति लोके; इष्टिका पक्वेष्टिका तस्याः पांशुश्चूर्णम्। प्रत्येकमिति समुदायभागनिवृत्त्यर्थं; षोडशांशं रसापेक्षया, एको भाग औषधस्य रसस्य षोडशभागाः। मिलितपदं पादपूरणार्थम्। इदं पांशुभिरित्येतस्य विशेषणम्। केचित्तु इष्टिकाचूर्णं दधिगुडलवणासुरीभिर्विमर्दितं कर्तव्यमित्याहुः, रागग्रहणार्थं जीर्णाभ्रकचूर्णेन सह विमर्दनं कर्तव्यं, गृहकन्यात्रिफलाचित्रकैः क्रमेण मर्दयित्वा मूर्च्छना सप्तवारं कर्तव्या इति वदन्ति; तद्धातुवादे न रसेषु। रसरत्नाकरस्तु,—"प्रक्षाल्य काञ्जिकैः साम्लैस्तमादाय विमर्दयेत्। गृहधूमेष्टिकाचूर्णदुग्धोर्णालवणं निशा॥ राजिका त्रिफला कन्या चित्रकं बृहती कणा। वन्ध्याककोंटकी चैतद्व्यस्तं वाऽथ समस्तकम्॥ क्वाथयेदारनालेन तेन मर्द्यो रसस्त्र्यहम्। प्रक्षाल्य काञ्जिकेनैव तमादाय विमूर्च्छयेत्॥ यन्त्रे लोहमये पात्रे पार्श्वयोर्वलयद्वयम्। तादृक्स्वल्पतरं पात्रं वलयप्रोतकोष्ठकम्॥ पूर्वपात्रोपरि न्यस्तं स्वल्पपात्रोपरि क्षिपेत्। रसं संमूर्च्छितं स्थूलपात्रमापूर्य काञ्जिकैः॥ द्वियामं स्वेदयेदेवं रसोत्थापनहेतवे। एतत्स्याज्जलहार्यन्त्रं रससाद्गुण्यकारकम्"—इति। अनेन प्रकारेण मर्दनान्तरमुत्थापनं कार्यम्। इति मर्दनम्॥ ७॥

मूर्छनमाह—

कामाताकटुकत्रयार्कपयसा कन्यानलोल्लासिना
संमूर्च्छ्योपरिपातयन्त्रविधिना ज्ञानी तमुत्थापयेत् ।
अन्तर्वल्ल्यपराजिताजलकणासृष्ट्यम्बुजामानवी-
पुष्पैरग्निसहं विधाय च परैरेनं त्रिधा पातयेत् ॥ ८ ॥

टी०—कामाता काकमाची 'काचमाची तु वायसी' इत्यमरः; 'कालिकामोणी' इति लोके; कटुकत्रयं प्रसिद्धं, अर्कपयः रूपिकादुग्धं, कन्या गृहकुमारी, अनलश्चित्रकः 'चित्रको वह्निसंज्ञकः' इत्यमरः, तेन उल्लासिना मिश्रितेन संमूर्च्छनीयः । मूर्च्छनं मर्दनेन औषधतुल्यत्वापादनं नष्टपिष्टत्वापादनं वा । उत्थापनमाह—उपरिपातयन्त्रविधिनेति । ज्ञानी भिषक् उपरिपातयन्त्रविधिना ऊर्ध्वपातयन्त्रविधिना उत्थापयेत् । ऊर्ध्वपातनयन्त्रविधिस्त्वग्रे वक्ष्यते । रसरत्नाकरे तु—"मेषशृङ्गी कृष्णधूर्तो बला श्वेतापराजिता । गोजिह्वा बाकुची नीली गरुडी क्षीरकन्दकः ॥ राजिका काकमाची च रविक्षीरं च काञ्जिकम् । व्यस्तानां वा समस्तानां द्रवैरेषां विमर्दयेत् । यामैकं रसराजं तु मूषायां सन्निरोधयेत् ॥ पुटैकेन पचेत्तं तु भूधरेऽथ विमर्दयेत् । पूर्वद्रावैर्यथापूर्वं रुद्ध्वा रुद्ध्वा विपाचयेत् ॥ इत्येवं सप्तधा कुर्याज्जायते मूर्च्छितो रसः । जलैः सोष्णारनालैर्वा क्षालनादुत्थितो भवेत् ॥ अथवा पातनायन्त्रे पातनादुत्थितो भवेत् । एवमुत्थापितः सूतस्त्रिधा पात्यः क्रमेण तु"—इति । भूधरयन्त्रम्,—"या मृत्तिका दुग्धतुषैः शणेन शिखित्रिकैर्वा हयलद्दिना च । लौहेन दण्डेन च कुट्टिता सा साधारणा स्यात्खलु मूषिकार्थम् ॥ मृत्तिका या च कौलाली वल्मीकमृत्तिकाऽथवा । वालुकागूढसर्वाङ्गां गर्ते मूषां रसान्विताम् ॥ दीप्तोपलैः संवृणुयाद्यन्त्रं[1] तद्भूधराह्वयम् । वह्निमित्रां क्षितौ सम्यङ्निखन्याद्द्व्यङ्गुलादधः ॥ उपरिष्टात्पुटं यत्र पुटं तद्भूधराह्वयम्-" इति । पुटं चात्र कापोतं कौक्कुटं वा । "षडङ्गुलप्रमाणेन मूषा मञ्जूषसंज्ञिता ॥ मञ्जूषाकारमूषा या निम्नतायामविस्तरा । भूसौ निखन्य तां मूषां दद्यात्पुटमथोपरि"—इति । इयमेवात्र ग्राह्या । एवं स्थले स्थले विचारणीयम् । भेदान्वितं पातमाह—अन्तर्वल्ल्यपराजितेत्यादि । अन्तर्वल्ली गगनवल्ली, अपराजिता श्वेतापराजिता 'आस्फोटा गिरिकर्णी स्याद्विष्णुकान्ताऽपराजिता' इत्यमरः, जलकणा जलपिप्पली, सृष्ट्यम्बुजा भूस्फोटः, छत्राकमिति केचित्, मानवी महाराष्ट्री, एतेषां पुष्पैः । अग्निसहं कृत्वा विधाय । अपरैर्द्रव्यैरग्निसहं कृत्वा । एनमुत्थापितं सूतं पातयेत् त्रिधा पातनं कुर्यात् ॥ ८ ॥

---

१ 'यन्त्रं' इति पा० ।

तत्र पातनायन्त्रप्रकारमाह—

**कृत्वा मृन्मयभाण्डसंपुटमधः प्रक्षिप्य भाण्डोदरे**
**तुर्यांशार्ककणैर्मनाक्सकरकैः संमर्द्य पिण्डीकृतम् ।**
**अन्यस्मिन् रचितोर्ध्ववारिणि मृदा संरुद्धसंधौ सुधीः**
**पक्त्वा त्रिप्रहरं समेन शुचिना भाण्डे तमूर्ध्वं नयेत् ॥ ९ ॥**

**टी०**—मृन्मयभाण्डं संपुटं कृत्वा मुखेन मुखं संलग्नं कृत्वेत्यर्थः । अत्राधोभाण्डोदरे पिण्डीकृतं रसं प्रक्षिप्य । किं कृत्वा पिण्डीकृतम् ? चतुर्थांशताम्ररजोभिः संमर्द्य, मनागीषत्, सकरकैः करकः गारपाषाण इति लोके प्रसिद्धः, तेन संमर्द्य सम्यङ्मर्दनं कृत्वेत्यर्थः । पुनः कीदृशे अन्यस्मिन्भाण्डे ? रचितोर्ध्ववारिणि पृष्ठे मृदादिना आलवालं कृत्वा रचितोर्ध्ववारित्वम् । तच्च संप्रदायादुष्णं जलं निष्कास्य पुनः शीतं प्रक्षेप्यम् । अथवा वस्त्रखण्डेन पुनः पुनर्जलं निष्कास्यान्यजलेनाप्लवनं कार्यम् । कीदृशे ? मृदा संरुद्धसंधौ । मृदा संरुद्धः सन्धिर्यस्य तस्मिन्, सुधीः पण्डितो भिषक् । समेन नाधिकन्यूनेन, एकरूपेण दीप्ताग्निना इत्यर्थः । शुचिना वह्निना, त्रिप्रहरं यामत्रयं, पक्त्वा पाकं कृत्वा, ऊर्ध्वभाण्डे नयेत् प्रापयेदित्यर्थः । अत्र भाण्डसंपुटप्रतिपादनाड्डमरुकाख्यं यन्त्रं लभ्यते । ( तस्य रसभस्मनि विधानात्तदेवात्र ग्राह्यम् । ) तल्लक्षणं तु—"यत्र स्थाल्युपरि स्थालीं न्युब्जां दत्त्वा निरोधयेत् । यन्त्रं डमरुकाख्यं तद्रसभस्मकृते हितम्"—इति । मृच्चात्र "खटिकापट्टकिट्टैश्च महिषीदुग्धमर्दितैः । वह्निमृत्स्ना भवेद्घोरवह्नितापसहा खलु"—इति । तोयमृदपि, "लेहवत्कृतबब्बूलक्काथेन परिमर्दितम् । जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम् ॥ इयं हि जलमृत्प्रोक्ता दुर्भेद्या सलिलैः खलु"—इति । इयं मृद्यथासंभवं योज्या । एतदभावे कौलालमृत्तिकया एव सर्वं कार्यम् । रसरत्नसमुच्चये तु—"अष्टाङ्गुलपरीणाहमानाहेन दशाङ्गुलम् । चतुरङ्गुलकोत्सेधतोयाधारं गलादधः ॥ अधोभाण्डे मुखं तस्य भाण्डस्योपरिवर्तिनः । षोडशाङ्गुलविस्तीर्णपृष्ठस्यास्ये प्रवेशयेत् ॥ पार्श्वयोर्महिषीक्षीरचूर्णमण्डूरफाणितैः । लिप्त्वा विशोषयेत्सन्धिं जलाधारे जलं क्षिपेत् ॥ चुल्ह्यामारोपयेदेतत्पातनायन्त्रमीरितम् । अथोर्ध्वभाजने क्षिप्तं स्थापितं तज्जले सुधीः ॥ दीप्तैर्वनोपलैः कुर्यादधःपातं प्रयत्नतः"—इति । ऊर्ध्वपातनयन्त्रं तु कुलालेन कारणीयम् । इति यन्त्रद्वयं ज्ञेयम् । 'शुल्बेन पातयेत्पिष्टिं त्रिधोर्ध्वं सप्तधा त्वधः' इति वचनात्त्रिधा सप्तधा वा कुर्यात् । रसरत्नाकरे तु—"काकमाची जया ब्राह्मी चाङ्गेरी रक्तचित्रकम् । अङ्कोल्लो राजवृक्षश्च तिलपर्णी कुमारिका ॥ मण्डूकी चित्रकः पाठा काकजङ्घा शतावरी । भूपाटलीं देवदाली निर्गुण्डी गिरिकर्णिका ॥ शङ्खपुष्प्यार्द्रकं भृङ्गी गोजिह्वा क्षीरकन्दकम् ।

नीली चैषां समस्तानां व्यस्तानां च द्रवैर्दिनम् ॥ ताम्रपादयुतं सूतं मर्दयेदम्लकैः सह । ततिपष्टिं पातयेद्यन्त्रे ह्यूर्ध्वपातनके पुनः ॥ आदाय मर्दयेत्तद्वत्ताम्रचूर्णेन संयुतम् । पातयेन्मर्दयेच्चैव ताम्रं दत्त्वा पुनः पुनः ॥ इत्येवं सप्तधा कुर्यान्मर्दनं पातनं क्रमात्"—इति ॥ ९ ॥

अधःपातनयन्त्रमाह—

**कृत्वा संपुटमेवमेव हि समक्ष्माशिग्रुराजीवरा-**
**वह्नित्र्यूषणसैन्धवं मृदुकृते लिप्त्वोर्ध्वभाण्डोदरे ।**
**ऊर्ध्वं प्रज्वलितानले वसुमतीसंरुद्धसर्वोदरे**
**संपूर्णाम्बुनि कर्मठः पुनरधःपात्रे रसं पातयेत् ॥ १० ॥**

टी०—समक्ष्माशिग्रुराजीवरावह्नित्र्यूषणसैन्धवं रसं मृदुकृते ऊर्ध्वभाण्डोदरे लिप्त्वा, कर्मठः वैद्यः, अधःपात्रे रसं पातयेदिति वाक्यान्वयः । समः समभागः । क्ष्माशिग्रुः महाराष्ट्रदेशे शिग्रुमूलान्यतितीक्ष्णानि भवन्ति तस्य नाम शिग्रुमूलमिति प्रसिद्धिः, राजी आसुरी, वरा त्रिफला, वह्निश्चित्रकः, त्र्यूषणं त्रिकटु, सैन्धवं सिन्धुलवणं, एतेषां वस्त्रपूतं चूर्णं अर्थान्निम्बुफलरसेन सह खल्वे मर्दयित्वा यावन्नष्टपिष्टिर्भवति तावन्मृदुकृते ऊर्ध्वभाण्डस्यान्तराले लेपं दत्त्वा अधःपात्रे पातयेत् । अथ लेपानन्तरं पूर्ववत्संपुटं मृत्कर्पटानि कृत्वा, अत्र क्त्वाप्रत्ययस्तु रसपातापेक्षया, न तु लेपापेक्षया; संप्रदायात् । शुष्कं कृत्वा भूगर्ते निवेश्य ऊर्ध्वं पुटं दद्यात् । अमुमेवार्थं विशेषणैः प्रकटयति—कीदृशेऽधःपात्रे ? वसुमतीसंरुद्धसर्वोदरे; वसुमती पृथिवी तस्यां संरुद्धं आसंधिलेपं सर्वोदरं यस्य; पुनः कीदृशे ? संपूर्णाम्बुनि, संपूर्णमम्बु यस्मिन् तत् संपूर्णाम्बु तस्मिन् । अनेन च विशेषणेन अधःसंपुटमात्रमध्ये जलं प्राप्यते, तच्च संप्रदायविरुद्धं, अतः संपूर्णाम्बुनीति विशेषणं न कर्तव्यं, किंतु संपूर्णाम्बुनि पात्रान्तरे भूमौ निखातिते तस्योपरि संपुटं दद्यात्, पश्चात्तस्य संपुटस्याधःपात्रस्य संधिरोधः कार्यः, इति तात्पर्यतो ज्ञेयम् । अत एव कीदृशे ? ऊर्ध्वं प्रज्वलितानले । पुटेन प्रज्वलनं कार्यम् । पुटं चात्र कौक्कुटं यथायथं रसमानापेक्षया वा विंशतिवनोपलैः शनैः शनैर्देयम् । अत एव कर्मठ इति कर्मकुशलः पातयेदित्यर्थः । इत्यधःपातनम् । अधःपातनयन्त्रं तु प्रागुक्तं, तच्च डमरुकाख्यं; रसरत्नाकरे—"त्रिफलाराजिकाशिग्रुव्योषं लवणपञ्चकम् । सूततुल्यं तु तत्सर्वं काञ्जिकैर्मर्दयेद्दिनम् ॥ तेन लिम्पेदूर्ध्वभाण्डं पृष्ठे देयं पुटं लघु । अधःपातनयन्त्रे तु पातितं तं समुद्धरेत्"—इति । अत्र च अधोजलस्यानुक्तत्वात् गोमयेनार्द्रमृत्तिकादिना वा पात्रस्याधः शैत्यं संपादनीयम् ॥

---

१ 'मृदुकृतं' इति पा० ।

तिर्यक्पातनमाह—

**कृत्वा वक्रमुखौ घटावथ नभोहैयङ्गवीनस्थितं**
**त्वन्यस्मिन्रसमन्यतश्च सलिलं प्रक्षिप्य चुल्ह्योर्न्यसेत् ।**
**कृत्वाऽधः सरसस्य मन्दमभितः पात्रस्य वह्निं शनै-**
**रन्यस्मिन्सलिले विचक्षणमतिस्तिर्यग्रसं पातयेत् ॥ ११ ॥**

**टी०**—अथानन्तरं विचक्षणमतिर्वैद्यस्तिर्यग्रसं पातयेत् । कथं? वक्रमुखौ घटौ कृत्वा, एकस्य मुखमपरस्य मुखमध्ये यथा गच्छति तथा द्वौ घटौ द्वयोश्चुल्ह्यो-रुपरि स्थापयेत्; एकस्मिन् घटे नभोहैयङ्गवीनस्थितं रसं कृत्वा, अन्यस्मिन् सलिलं प्रक्षिप्य, पश्चात् मुखमध्ये मुखं दत्त्वा, सन्धिलेपादिकं कार्यं; पश्चाच्चुल्ल्यो-रुपरि स्थापनं कार्यं, तत्र रसपात्रस्याधो मन्दं मन्दं यथा भवति तथा कृत्वाऽ-भितो वह्निं प्रज्वालयेत्, अन्यस्मिन्पात्रे दत्तसलिले रसं नयेदिति वाक्ययो-जना । नभोहैयङ्गवीनस्थितं नभोऽभ्रकं तस्य हैयङ्गवीनं नवनीतप्राया द्रुतिः, तत्र स्थितं तेन सह मर्दितम् । तदुक्तम्,—"श्लक्ष्णीकृतमभ्रदलं रसेन्द्रयुक्तं तथाऽऽरनालेन । खल्वे दत्त्वा मृदितं यावन्नष्टपिष्टतामेति ॥ कुर्यात्तिर्यक्पातनपाति-तसूतं क्रमेण दृढवह्नौ । संस्वेद्यः पात्योऽसौ निपतति यावद्दृढश्चाग्नौ ॥ तदाऽसौ शुध्यते सूतः कर्मकारी भवेद्ध्रुवम्"—इति । रसरत्नाकरे तु,—"धान्याभ्रकं रसं तुल्यं मर्दयेदारनालकैः । नष्टपिष्टेन तत्पात्यं तिर्यग्यन्त्रे दृढाग्निना"—इति । तिर्य-क्पातनयन्त्रलक्षणं तु—"क्षिपेद्रसं घटे दीर्घे नताधोनालसंयुते । तन्नालं निक्षिपे-दन्यघटकुक्ष्यन्तरे खलु ॥ तत्र रुद्धे मृदा सम्यग्वदने घटयोरधः । अधस्ताद्रस-कुम्भस्य ज्वालयेत्तीव्रपावकम् ॥ इतरस्मिन्घटे तोयं प्रक्षिपेत्स्वादुशीतलम् । तिर्य-क्पातनमेतद्धि वार्तिकैरभिधीयते"-इति । यद्वा "भाण्डकण्ठादधश्छिद्रे वेणुनालं विनिक्षिपेत् । कांस्यपात्रद्वयं कृत्वा संपुटं जलगर्भितम् ॥ नलिकास्यं तत्र योज्यं दृढं तच्चापि कारयेत् । युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र घटे रसः ॥ अग्निना तापितो नालात्तोये तस्मिन् पतत्यधः । यावदुष्णं भवेत्सर्वं भाजनं तावदेव हि ॥ जायते रससंधानं द्रे(डे)कीयन्त्रमिति स्मृतम्"—इति । इति प्रकारेण यथाबुद्ध्या यन्त्रं संपादनीयम् । इति तिर्यक्पातनम् ॥ ११ ॥

से(बो)धनमाह—

**कूप्यां वा नृफलोदरे रसमथ प्रक्षिप्य सर्वात्मना**
**सार्धं सैन्धववारिणा त्रिदिवसं भूमौ मृदा रोधयेत् ।**

टी०—अथ रसं कूप्यां काचकूप्यां, नृफलोदरे नारिकेलफलमध्ये वा, सैन्धववारिणा सार्धं प्रक्षिप्य, सर्वात्मना भूमौ मृदा रोधयेत्रिदिवसम् । रोधनस्य फलं,—"मर्दनैर्मूर्छनैः पातैर्मृदुः शान्तो भवेद्रसः । सृष्ट्यम्बुजनिरोधेन ततो मुखकरो रसः"—इति । सृष्टिः—शुक्रं, मूत्रं, नारीणां रजश्च; अम्बुजं सैन्धवम् । अङ्गारयुक्तचुल्ल्यां मध्ये रोधनं पुटं वा । रसरत्नाकरे,—"लवणेनाम्बुपिष्टेन हण्डिकान्तर्गतं रसम् । आच्छाद्याथ जलं क्षिप्त्वा शरावेण निरोधयेत् ॥ ऊर्ध्वं लघुपुटो देयो लब्धाप्यायो भवेद्रसः–" इति रोधनम् ।—

**सर्पाक्षीशितिधूर्तभृङ्गनलिनीभृङ्गीवचामागधी-**
**वन्ध्याकर्कटिकाकषायसलिलस्वेदैर्नियच्छेद्रसम् ॥ १२ ॥**

संयमनमाह—सर्पाक्षीत्यादि ।—सर्पाक्षी भुजङ्गाक्षी, शितिधूर्तः कृष्णधत्तूरः, भृङ्गो मार्कवः, नलिनी कमलिनी, भृङ्गी भङ्गा, वचा उग्रगन्धा, मागधी पिप्पली जलपिप्पली वा, वन्ध्याकर्कटिका अफला कर्कोटी, एषां कषायश्चतुर्थांशावशेषितः, तेन स्वेदैः रसं नियच्छेत्, नियमनं कुर्यादित्यर्थः । "चतुष्प्रस्थजलाधारं चतुरङ्गुलकाननम् । घटयन्त्रमिदं प्रोक्तं तदाप्यायनकं स्मृतम्"—इति ॥ १२ ॥

प्रकारान्तरमाह—

**यद्वा मृन्मयभाजनान्तरगतं पूर्वोक्तवारा रसं**
**रुद्ध्वा भूवलये तुषानलपुटैरूर्ध्वं नियच्छेद्रसम् ।**

मृन्मयभाजनान्तरगतं पूर्वोक्तवारा सह भूवलये रसं रुद्ध्वा ऊर्ध्वं तुषानलपुटैर्नियच्छेत् ।—

**भूगे पूरितपूर्ववारिणि रसं निक्षिप्य वस्त्रावृतं**
**भाण्डे योजितलोहखर्परमुखे चोर्ध्वं पुटे रोधयेत् ॥ १३ ॥**

टी०—प्रकारान्तरमाह—भूग इति ।—पूरितपूर्ववारिणि भाण्डे रसं वस्त्रावृतं निक्षिप्य, लोहखर्परं लोके 'तवा' इति मुखे दत्त्वा, ऊर्ध्वं करीषाग्निं दद्यादिति वाक्यान्वयः । अर्थस्तु स्फुट एव । पूर्ववारिति धूर्तकषायादिकम् । उक्तं च,—"स्वेदनादिवशात्सूतो वीर्यं प्राप्नोत्यनुत्तमम् । नियम्योऽसौ ततः सम्यक् चपलत्वनिवृत्तये"—इति । रसरत्नाकरस्तु,—"कर्कोटीं क्षीरकन्दं च सर्पाक्षीं यवचिञ्चिकाम् । पद्मं निम्बं भृङ्गराजं व्यस्तं वाऽथ समस्तकम् ॥ कल्कयेदारनालेन तद्द्रवैः पाचयेद्रसम् । दिनं नियामके यन्त्रे तमादायाथ दीपयेत्"—इति नियमनम् । यन्त्रं तु मूलकृतैव प्रतिपादितम् । "मरिचैर्भूखगयुक्तैर्लवणासुरिशिग्रुटङ्कणोपेतैः । काञ्जिकयुक्तैस्त्रिदिनं ग्रासार्थी जायते स्वेदात्"—इति केचित् । भूः सौराष्ट्री, खगः तुत्थं, आसुरी राजिका, अथवा मुखगो भुजन्तुः । तुत्थमरिचयवक्षारत्रिलवणयुक्तकाञ्जिकमध्ये

स्थितो रसो मुखयुक्तो भवतीति केचित्। तुत्थमरिचयवक्षारत्रिलवणयुक्तकाञ्जिकमध्ये स्वेदनमिति वा ॥ १३ ॥

संदीपनमाह—

**कासीसक्षितिशिग्रुबीजलवणक्षारासुरीषट्कटु-**
**खर्वल्लीजलपिप्पलीतुषजलस्वेदेन तं दीपयेत्।**

टी०—कासीसं पुष्पकासीसं, क्षितिशिग्रुबीजं कटुशोभाञ्जनस्य बीजं, लवणमत्र सैन्धवं, क्षारष्टङ्कणक्षारः, अथवा यवक्षारादिकं, आसुरी राजिका, षट्कटु पिप्पलीपिप्पलीमूलेत्यादि, खर्वल्ली आकाशवल्ली, जलपिप्पली तोयपिप्पली; एतेषां कल्कं दत्त्वा तुषजलेन पूर्णे घटे दोलायन्त्रे स्वेदेन तं रसं दीपयेत्। तदुक्तम्—"स्वेदयेदासवाम्लेन वीर्यतेजोभिवृद्धये। यथोपयोगं स्वेद्यः स्यान्मूलिकानां रसेषु च ॥ कर्कोटीफणिनेत्राभ्यां वृश्चिकाम्बुजमार्कवैः। समं कृत्वाऽऽरनालेन स्वेदयेत्तद्दिनत्रयम्"—इति। आसवाम्लं तु,—"त्रिक्षारसिन्धुखगभूशिखिशिग्रुराजीतीक्ष्णाम्लवेतसमुखैर्लवणोषणाम्लैः। नेपालताम्रदलशोषितमारनाले साम्लासवाम्लमुदितं रसदीपनं तत्"—इति। रसमूलिकाश्च,—"सर्पाक्षी क्षीरिणी वन्ध्या मत्स्याक्षी शङ्खपुष्पिका। काकजङ्घा शिखिशिखा ब्रह्मदण्ड्याखुपर्णिका॥ वर्षाभूः कञ्चुकी दूर्वा सैर्येकोत्पलशिम्बिकाः। शतावरी वज्रलता वज्रकन्दोऽग्निकर्णिका ॥ मण्डूकपर्णी पाताली चित्रको ग्रीष्मसुन्दरः। काकमाची महाराष्ट्री हरिद्रा तिलपर्णिका ॥ श्वेतार्कशिग्रुधत्तूरमृगदूर्वारसाङ्कुशाः। रम्भा रक्ता च निर्गुण्डी लज्जालुः सुरदालिका ॥ जाती जयन्ती श्रीदेवी भूकदम्बः कुसुम्भकः। कोशातकी नीरकणा लाङ्गली कटुतुम्बिका॥ चक्रमर्दोऽमृताकन्दः सूर्यावर्तेषुपुङ्खिके। वाराही हस्तिशुण्डी च प्रायोऽमू रसमूलिकाः॥ रसस्य भावने स्वेदे मूषालेपे च पूजिताः"—इति। रसरत्नाकरस्तु—"स्वर्णपुष्पी च कासीसं मरीचं राजिका मधु। क्षीरकन्दो जया कन्या विजया गिरिकर्णिका ॥ काकजङ्घा शङ्खपुष्पी पातालगरुडी कणा। वन्ध्या कर्कोटकी वह्निर्व्यस्तं वाथ समस्तकम्॥ पेषयेदम्लवर्गेण तद्द्रवैर्मर्दयेद्रसम्। दिनान्ते बन्धयेद्वस्त्रे दोलायन्त्रे त्र्यहं पचेत्॥ पूर्वद्रावैर्घटे पूर्णे ग्रासार्थी जायते रसः"—इति। अत्र सर्वत्र स्वेदसंन्यासौ कार्यौ। तल्लक्षणं तु प्रागुक्तम्। इति दीपनम् ॥—

**संस्कारैरिति संस्कृतोऽष्टभिरसौ निष्कञ्चुको निर्मलः**
**सूतः सर्वरसेष्वकुण्ठमहिमा स्यादष्टमांशोषितः॥ १४ ॥**

इदानीं शुद्धस्य फलकथनद्वारा संस्कारोपसंहारमाह—संस्कारैरिति।—इति अष्टभिः संस्कारैः संस्कृतोऽसौ सूतोऽष्टमांशोषितः स्यात् अष्टमांशेन उषितः उर्वरितः। कीदृशः? निष्कञ्चुकः निर्गताः सप्तकञ्चुकाः यस्मात्। निर्मलः मलो दोषस्तद्र-

हितः । पुनः कीदृशः ? सर्वरसेषु अकुण्ठमहिमा अव्याहतशक्तिः । तदुक्तं— "विषं वह्निर्मलश्चेति दोषा नैसर्गिकास्त्रयः । रसे मरणसंतापमूर्छानां हेतवः क्रमात् ॥ यौगिकौ नागवङ्गौ द्वौ तौ जाड्याध्मानकुष्ठदौ । औपाधिकाः पुनश्चान्ये कीर्तिताः सप्त कञ्चुकाः ॥ भूमिजा गिरिजा वार्जा द्वौ च द्वौ नागवङ्गजौ । द्वादशैते रसे दोषाः प्रोक्ता रसविशारदैः ॥ भूमिजाः कुर्वते कुष्ठं गिरिजा जाड्यमेव च । वारिजा वातसंघातं दोषाढ्यं नागवङ्गयोः ॥ तस्मात्सूतविधानार्थं सहायैर्निपुणैर्युतः । सर्वोपस्करमादाय रसकर्म समाचरेत् । द्वे सहस्रे पलानां तु सहस्रं शतमेव वा ॥ अष्टाविंशतपलान्येव दश पञ्चैकमेव वा । पलार्धेनापि कर्तव्यः संस्कारः सूतकस्य हि ॥ सुदिने शुभनक्षत्रे रसशोधनमारभेत्"—इति । रसरत्नाकरे तु दीपनानन्तरमनुवासनाख्यो नवमः संस्कारोऽस्ति । "दीपितं रसराजं तु जम्बीररससंयुतम् । दिनैकं धारयेद्धर्मे मृत्पात्रे वासितो भवेत्"—इत्यनुवासनम् । अत्र पात्रं महाचषकं काचादिरचितं ज्ञेयम् । अत एवाह रसरत्नाकरः,—"स्वेदनादिनवकर्मसंस्कृतः सप्तकञ्चुकविवर्जितो भवेत् ॥ अष्टमांशमवशिष्यते यदा शुद्धसूत इति कथ्यते बुधैः"—इति ॥ १४ ॥

इदानीमष्टौ संस्कारान्कर्तुमशक्तस्य भिषजः संक्षेपेण संस्कारानाह—

**चिञ्चाषट्कटुदुग्धकाञ्जिकवराखिन्नस्त्रिघस्त्रं ततः**
**कन्याव्योषवरानलार्कपयसा संमूर्छितो वासरम् ।**
**सार्धांशाभ्ररविस्त्रिरूर्ध्वपतनैरुत्पन्नशुद्धिः स्वरा-**
**ड्योज्यः सर्वरसेषु शुद्धमतिभिः श्रीपारदः पारदः ॥ १५ ॥**

**टी०**—चिञ्चा तिन्तिडिकाफलं, षट्कटु षडूषणं, दुग्धं रविदुग्धं, काञ्जिकं सौवीरं, वरा त्रिफला, एतेषां द्रव्याणां क्वाथ्यत्वं, द्रवाणां तु क्वाथत्वम् । तत्र रसस्य दोलायन्त्रेण स्वेदनं कार्यम् । तत्र कालनियममाह—त्रिघस्त्रं त्रिदिनम् । ततः कन्याव्योषवरानलार्कपयसा वासरं मर्दनेन संमूर्छितः कार्यः । रसस्य षोडशांशेनौषधानि, ततः सार्धांशाभ्ररविः सन् ऊर्ध्वपतनैस्त्रिभिरुत्पन्नशुद्धिः शुद्धमतिभिर्वैद्यैः सर्वरसेषु योज्यः । कथंभूतः पारदः ? श्रीपारदः, श्रियो लक्ष्म्याः पारं ददातीति श्रीपारदः । पुनः कीदृक् ? स्वराट् स्वेनैव राजत इति स्वराट् । एतावतैव शुद्धो भवतीति प्रतिपादितम् ॥ १५ ॥

एतदपेक्षया स्वल्पं शोधनमाह—

**वर्षाभूतुलसीजलैरथ रसं संतप्तखल्वे सम-**
**व्रीह्यभ्रं परिमर्द्य भूधरपुटे वज्रान्धमूषोदरे ।**

**उद्दीप्तेन तुषानलेन शनकैः संपाचितः सप्तधा**
**शुद्धश्चोपरिपातयन्त्रपतितः सर्वोपयोगी रसः ॥ १६ ॥**

टी०—अथेति विकल्पार्थे । संतप्तखल्वे लोहमये समव्रीह्यभ्रं रसं परिमर्द्य, वज्रान्धमूषोदरे संस्थाप्य, भूधरपुटे उद्दीप्तेन तुषानलेन शनकैः सप्तधा संपाचितः सन् शुद्धो भवति, पश्चादुपरिपातयन्त्रपतितो रसः सर्वोपयोगी भवतीति योजना । तप्तखल्वभूधरलक्षणं तु प्रागुक्तम् । वज्रमूषालक्षणं तु—"मृदस्त्रिभागाः शणलद्दि-भागौ भागश्च निर्दग्धतुषोपलादेः । किट्टार्धभागं परिखण्ड्य वज्रमूषां विदध्यात्किल सत्त्वपाते"—इति । "गोर्वरैर्वा तुषैर्वापि पुटं यत्र प्रदीयते । तद्वोवरपुटं प्रोक्तं रस-भस्मप्रसिद्धये"—इति प्रतिपादितम् । व्रीह्यभ्रोऽत्र धान्याभ्रकः । अन्वता तु उपरि चक्रीं दत्त्वा पूर्वोक्तमृदा वस्त्रेण छादनं, यद्वा मूषापिधानयोः सन्धौ काचचूर्णं दत्त्वा उपर्यग्निं दत्त्वा सन्धिलेपः कार्यः ॥ १६ ॥

शोधनान्तरमाह—

**भूगर्तेऽजशकृत्तुषानलपुटे संस्थापिते लोहजे**
**खल्वे जम्भलकाञ्जिकेन बलिना सार्धं दशांशेन सः ।**
**संमर्द्योपरिपातयन्त्रविधिना निष्कासितः सप्तधा**
**शुद्धः पारदकर्मठैर्निगदितो वैद्यैरवद्येतरैः ॥ १७ ॥**

टी०—अजशकृत्तुषानलयुक्ते भूगर्ते लोहजे खल्वे संस्थापिते सति, दशांशेन बलिना सार्धं सः रसः जम्भलकाञ्जिकेन संमर्द्यः, पश्चादुपरिपातनयन्त्रेणोपरिपा-तनं, एवं सप्तधा निष्कासितः सन् शुद्धः पारदः पारदकर्मठैर्वैद्यैर्निगदितः । कीदृशैः ? अवद्येतरैरत्युत्तमैरित्यर्थः । बलिरत्र गन्धकः । जम्भलं जम्बीरं निम्बूफलं वा । अथवा दीपिकायन्त्रे निपातितः सर्वदोषनिर्मुक्तस्तिर्यक्पातनविधिना निपातितः सूतराजः स्यात् । दीपिकायन्त्रं तु—"कच्छपयन्त्रान्तर्गतमृन्मयपीठस्थदीपिका-संस्थः । यस्मिन्निपतति सूतः प्रोक्तं तद्दीपिकायन्त्रम्"-इति । "भाण्डकण्ठादधश्छिद्रे वेणुनालं विनिक्षिपेत् । कांस्यपात्रद्वयं कृत्वा संपुटं जलगर्भितम् ॥ नलिकास्यं तत्र योज्यं दृढं तच्चापि कारयेत् । युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र घटे रसः ॥ अग्निना तापितो नालात्तोये तस्मिन्पतत्यधः । यावदुष्णं भवेत्सर्वं भाजनं तावदेव हि ॥ जायते रससन्धानं दीपयन्त्रमिति स्मृतम्"—इति ॥ १७ ॥

एतत्करणासमर्थेन हिङ्गुलात्पारदो निष्कास्यः, स रसेषु योज्य इत्याह—

**हिङ्गूलात्पृथुपारिभद्रकरसैर्वा जम्भवारा दिनं**
**पिष्टादूर्ध्वगपातयन्त्रविधिना निष्कासयेत्पारदम् ।**

**पक्वात् स्नुक्तिलतैलकाञ्जिकरसैर्लोहस्य पात्रेऽचिरा-**
**त्किंचोच्चप्रचलाकिपित्तसलिलैः संस्कारितात् सप्तधा ॥१८॥**

टी०—पृथुपारिभद्रकरसैरथवा जम्भवारा दिनं पिष्टात् मर्दिताद्धिङ्गुलात्पारदमूर्ध्वगपातयन्त्रविधिना निष्कासयेत् । पृथुर्बाष्पिका, पारिभद्रः निम्बः; पृथुपारिभद्रो महानिम्बो वा कण्टकिपलाशो वा । जम्भं निम्बूफलम् । प्रकारान्तरेण हिङ्गूलाद्रसाकर्षणमाह—पक्वादिति । स्नुक्तिलतैलकाञ्जिकरसैर्लोहस्य पात्रे पक्वाद्धिङ्गूलात्पारदमूर्ध्वपातयन्त्रविधिना निष्कासयेत् । किंच उच्चप्रचलाकिपित्तसलिलैर्लोहस्य पात्रे सप्तधा संस्कारितात् भाविताद्धिङ्गूलात्पारदमूर्ध्वपातयन्त्रविधिना निष्कासयेदिति वाक्यान्वयः । केचित्तु भावितं हिङ्गूलं कूपिकामध्ये दत्त्वा पातालयन्त्रविधिनाऽगरुसारवद्रसं निष्कासयन्ति; अथवा "स्थालिकोपरि विन्यस्य सम्यक् स्थालीं निरुध्य च । ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा वह्निं प्रज्वालयेदधः ॥ एतद्विद्याधरं यन्त्रं हिङ्गूलाकृष्टिहेतवे"—इति । इदमपि ज्ञेयम्—"मेषीक्षीराम्लवर्गाभ्यां दरदं घर्मभावितम् । शतधा तत्प्रयत्नेन शोष्यं पेष्यं खरातपे ॥ सितस्वर्णस्य पत्राणि लिप्त्वा लिप्त्वा पुटे चरेत् । एवं त्रिसप्तधा कुर्याद्दिव्यं भवति काञ्चनम्"—इति; प्रसङ्गादिदमपि प्रयोजनमुक्तम् ॥ १८ ॥

इदानीं लोहस्य शुद्धिमारणादिकमभिधत्ते—

**रुक्मं रौप्यमयांसि शुल्बमुरगं रङ्गं घनं वर्तुलं**
**घोषं लोहमिदं त्रयं च चरमं नाम्नोपलोहं जगुः ।**
**कान्तं तीक्ष्णकमुण्डके त्रयमिदं तानि प्रशस्तं यथा-**
**पूर्वं शस्त्रभवं तु तीक्ष्णमितरत्साधारणोत्पादकम् ॥ १९ ॥**

टी०—लोहं त्रिविधं—शुद्धलोहं, पूतिलोहं, मिश्रलोहं च; एतत्त्रयमपि शुद्धलोहोपलोहाभ्यां द्विविधम् । रुक्मं सुवर्णं, रौप्यं रजतं, अयांसि मुण्डतीक्ष्णकान्तभेदात्, तदा बहुवचनं सार्थकं; शुल्बं ताम्रं, उरगं सीसं, रङ्गं त्रपु, घनं कांस्यं, वर्तुलं पित्तलजातिभेदः, घोषं पञ्चरसं वा । रुक्मादिषट्कं मुख्यं लोहं, घनवर्तुलघोषाख्यत्रयमुपलोहं जगुः 'रसज्ञा' इति शेषः (खर्परसत्त्वं तु शीसकस्य भेदः, अतिरिक्तधातुरिति सर्वे) । तत्र सुवर्णस्य रौप्यस्य चैकैकरूपलाद्भेदमुपेक्ष्य लोकप्रसिद्धलोहभेदानाह—कान्तमित्यादि ।—कान्तं कान्तसंज्ञकं, तीक्ष्णं गजवल्लयाख्यं 'पोलाद' इति यावत्, मुण्डकं कटाहादिजनकं, इदं त्रयं यथापूर्वं प्रशस्तं मुण्डकात्तीक्ष्णं तीक्ष्णात्कान्तम् । अत एवोक्तम्,—"किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शतोन्मितम् । कान्तं लक्षगुणं प्रोक्तं"—इति । तेषां लक्षणान्याह—शस्त्रभवं शस्त्रजनकं तीक्ष्णमित्युच्यते । इतरन्मुण्डं साधारणोत्पादकं कटाहशृङ्खलाद्युत्पादकम् ॥ १९ ॥

कान्तलक्षणमाह—

**कान्तं तद्बुवते न यत्र सलिले तैलं विसर्पेत्पयोऽ-**
**प्युच्चैस्त्वं न जहाति यत्र कटुतां निम्बच्छदाम्भस्त्यजेत्।**

टी०—यत्र सलिले तैलं न विसर्पेत्तत्कान्तं ब्रुवते, पयो दुग्धं, उच्चैस्त्वं पाकेन ऊर्ध्वशिखराकारत्वं न जहाति न त्यजति; यदपि द्वितीयं तल्लक्षणं; यत्र पात्रे निम्बपत्रोदकं तिक्ततां त्यजेत्तत्कान्तं ब्रुवते इति वाक्यार्थः।

**तक्रे काञ्जिकमूत्रयोस्तिलभवे तैले कुलित्थाम्भसि**
**स्याच्छुद्धं परिवर्त्य लोहमखिलं त्रिःसप्तधा वासितम्॥२०॥**

लोहस्योपलोहस्य च शुद्धिमाह—तक्र इत्यादि। तक्रं कालशेयं, काञ्जिकं धान्याम्लं, मूत्रं गोमूत्रं, तिलभवे तैले तिलतैले अतस्यादिनिवारणार्थं, कुलित्थाम्भः कुलित्थयूषः; एतेषु सुवर्णाद्यारभ्य घोषान्तं लोहं यथायोग्यं तप्तं तप्तं द्रवीकृतं च त्रिःसप्तधा एकविंशतिवारान् वासितं भावितं, परिवर्त्य आवर्त्य द्रुतमित्यर्थः। "क्रमान्निषेचयेत्तप्तं द्रावे द्रावे तु सप्तधा। स्वर्णादिलोहपत्राणां शुद्धिरेषा प्रकीर्तिता"—इति वचनात्पत्राणामेव तापः; वङ्गसीसयोर्द्रुतयोर्निषेचनम्। अत्र सुवर्णस्य तैलादिसंस्कारो नास्तीति केचित्; रूप्यप्रकरणे तस्योक्तत्वात्॥२०॥

इदानीं लोहादीनां शुद्धिसत्त्वभस्मद्रुतिरसायनानि निरूप्यन्ते॥

तत्र हेमभस्मप्रकारमाह—

**हेम्नः श्लक्ष्णदलाद्रजो द्विगुणितं तादृग्रसस्तौ पुन-**
**र्जम्बीरेण विमर्दयेत्सकरकौ यावद्भवेद्धद्धता।**
**प्रातः पर्युषितौ तु जम्भसलिले तावन्धमूषान्तरे**
**मध्ये तत्समगन्धकं मृदुपुटे पक्त्वा शनैरुद्धरेत्॥२१॥**
**तौ त्रिः काञ्चनवारिणा विलुलितौ वा कन्यया सप्तभिः**
**पूर्वप्रक्रिययैव जाम्बवनिभे स्यातां पुटे भस्मनी।**

टी०—श्लक्ष्णदलं कण्टकवेध्यं, तस्माद्रजश्चूर्णं तद्द्विगुणितं, तादृक्छुद्धः रसः सोऽपि द्विगुणितः; करको गारपाषाणः, तेन सह वर्तमानौ, जम्बीररसेन मर्दयेद्यावद्गुटिका। जम्भसलिले निम्बूरसे, पर्युषितौ दिनरात्रिं स्थितौ कृत्वा। अन्धमूषामध्ये तत्समगन्धकं ताभ्यां समं गन्धकं गोलकस्याध ऊर्ध्वं दत्त्वा, मृदुपुटे पक्त्वा, उद्धरेत् स्वाङ्गशीतं यथा भवति तथा; पश्चात्त्रिः काञ्चनवारिणा विलुलितौ त्रिवारं भावितौ, अथवा कन्यया कुमारिकारसेन सप्तवारं भावितौ, पूर्वप्र-

क्रियया शनैर्लघुपुटैर्भस्मनी सुवर्णपारदयोः स्यातां भवेताम् । भस्मपरीक्षामाह—जाम्बवनिभे कृष्णारुणे । जम्ब्वाः फलं जाम्बवम् ॥ २१ ॥—

भस्मप्रकारान्तरमाह—

**यद्वा कज्जलिकोपलिप्तमसकृद्धेम्नो दलं काञ्चन-**
**त्वङ्मध्यस्थितमन्धपात्रपुटितं द्विःसप्त भस्मीभवेत् ॥ २२ ॥**

टी०—हेम्नो दलं कण्टकवेध्यं कृत्वा, वारंवारं पुटे पुटे कज्जलिका वक्ष्यमाणा, तया लेपितं किंचिच्छुष्कं[1] कृत्वा, काञ्चनत्वङ्मध्यस्थं कोविदारत्वक्पिण्डान्तरे विद्यमानमन्धमूषागतं कृत्वा, चतुर्दशधा पुटितं भस्मीभवेत् । इदं पत्राणामेव ॥ २२ ॥

कज्जलीं विनैव भस्मप्रकारमाह—

**स्थूलं वा लघु किंच काञ्चनदलं त्रिः काञ्चनारिद्रव-**
**प्रक्लिद्यन्मृतशृङ्गलिप्तपुटितं भस्मत्वमापद्यते ।**

टी०—हेमपत्रं पृथु कण्टकवेध्यं वा कोविदारद्रवभावितं मृतगवादिशृङ्गे न्यस्तं संविलिप्तं त्रिःपुटितं भस्मत्वमापद्यते । अथवा मृतं भस्मीकृतं शृङ्गं मृद्दारशृङ्गं, तेन विलिप्तम् । अत्र लोहमारणं अरिलोहेन न कर्तव्यं, किन्तु रसगन्धौषधीभिः; तदुक्तं—"लोहानां मारणं श्रेष्ठं सर्वेषां रसभस्मना । मूलिभिर्मध्यमं प्राहुः कनिष्ठं गन्धकादिभिः ॥ अरिलोहेन लोहस्य मारणं दुर्गुणप्रदम् । धातुभिर्गन्धकाद्यैश्च निर्द्रवैर्मर्दितो रसः ॥ सुश्लक्ष्णकज्जलाभासः कज्जलीत्यभिधीयते"—इति । अत्र तु हेम्नो द्रुतिरपि ज्ञेया । तदुक्तम्—"चूर्णं सुरेन्द्रगोपानां देवदालीफलद्रवैः । भावितं शतशो हेम करोति जलवद्द्रुतम् ॥ मण्डूकास्थिवसाटङ्कहयलालेन्द्रगोपकैः । प्रतीवापेन कनकं सुचिरं तिष्ठति द्रुतम्"–इति । सुवर्णं पञ्चधा–प्राकृतसहजवह्निसंभूतखनिसंभवरसेन्द्रवेधसंभवभेदात्; तेषामप्राप्तेः प्रकृतानुपयोगाच्च यल्लोके प्रसिद्धं तच्चतुर्दशवर्णं ग्राह्यं, षोडशवर्णं तु देवादिषु प्रसिद्धम् । ततो न्यूनवर्णं चेत्पत्राणि कण्टकवेध्यानि कृत्वा लवणभस्मकाञ्जिकं दत्त्वा पुनः पुटानि दद्यात् । अन्धमूषा तु संप्रदायात् वज्रमृत्तिकया वर्तुलां कृत्वा तन्मध्ये गोलकं दत्त्वोपरि खर्परचक्रिकां दत्त्वा सप्त मृत्कर्पटान् दत्त्वा कुर्यात्; अथवा मूषाखर्परयोः सन्धौ काचटङ्कणादिकं दत्त्वा धमनं कुर्यात् । अन्धमूषापुटे तु प्रागुक्ते । तदुक्तम्,—"निर्वक्त्रगोलकाकारा पुटनद्रव्यगर्भिणी । गोलमूषेति सा प्रोक्ता सत्वरं द्रव्यरोधिनी"—इति । प्रथमपुटं च गोवरैरेव । द्वितीयादिपुटे पुनर्गन्धकं दत्त्वा निम्बूरसेन मर्दयित्वा कुक्कुटं लावकं वा पुटं दद्यात् । एवं यावद्विहितं महापुटपर्यन्तं कुर्यात् । इदं च सर्वत्र लोहादिमारणे ज्ञेयम् । यदि तु तीक्ष्णादिलोहमा-

---

१ 'किञ्चित्तप्तं' इति पा० ।

रणं तदा गजपुटानि ज्ञेयानि । तथा ताम्रादिमारणे काष्ठादिजन्योऽग्निपाको ज्ञेयः । तदुक्तम्,—"रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् । नेष्टो न्यूनाधिकः पाकः सुपाकं हितमौषधम् ॥ लोहादेरपुनर्भावो गुणाधिक्यं ततोऽग्र्यता । न चाप्सु मज्जनं रेखापूर्णता पुटतो भवेत् । पुटाद्ग्रावो लघुत्वं च शीघ्रं व्याप्तिश्च दीपनम् ॥ जारितादपि सूतेन्द्राल्लोहानामधिको गुणः । ऊर्ध्वं षोडशिकां पत्रैस्तुषैर्वा गोवरैः पुटम् ॥ यत्र तल्लावकाख्यं स्याल्लघुद्रव्यस्य साधने । पुटं भूमितले यत्तद्वितस्तिद्वितयोच्छ्रितम् ॥ तावच्च तलविस्तीर्णं तत्स्यात्कुक्कुटकं पुटम् । यत्पुटं दीयते भूमावष्टसंख्यवनोपलैः ॥ बद्ध्वा सूतकभस्मार्थं कपोतपुटमुच्यते । गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं चूर्णितगोमयम् ॥ तद्गोवरपुटं प्रोक्तम्"—इति । "निम्ने विस्तरतः कुण्डे द्विहस्ते चतुरस्रके । वनोपलसहस्रेण पूरिते पुटनौषधम् ॥ क्रौञ्च्यां रुद्धं प्रयत्नेन पिष्टिकोपरि विन्यसेत् । वनोपलसहस्रार्धं क्रौञ्चिकोपरि विन्यसेत् । वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम्"–इति। राजहस्तप्रमाणेनेदमेव गजपुटमित्युच्यते। केचित्तु गजप्रमाणमूर्ध्वाधःपुटं गजपुटमिति । सर्वत्र,—"अनुक्ते पुटमाने तु साध्यद्रव्यबलाबलात् । पुटं विज्ञाय दातव्यमूहापोहविचक्षणैः"—इति । एतानि पुटानि यत्र यत्रोपयुक्तानि तत्र तत्र विचार्य देयानि । एवं कुम्भपुटमपि ज्ञेयम् । "राजहस्तप्रमाणेन चतुरस्रं चतुर्भकम् ॥ पूर्णं चोपलसाटीभिः कण्ठावध्यथ विन्यसेत् । विन्यसेत्कुमुदीं तत्र पुटनद्रव्यपूरिताम् ॥ पूर्वच्छगणतोऽर्धानि गिरिण्डानि विनिक्षिपेत् । एतद्गजपुटं प्रोक्तं महागुणविधायकम् ॥ इत्थं चारत्निके कुण्डे पुटं वाराहमुच्यते"–इति । एतानि लोहादौ सर्वत्र ज्ञेयानि । पाषाणमृत्तिकासत्त्वरूपत्वात्सत्त्वान्तरं नास्ति लोहानां, सुवर्णस्यैव रसायनत्वादतिरिक्तं रसायनं नास्ति । तदुक्तम्,—"रसस्य भस्मना वाथ रसेनालिप्य तद्दलम् । हिङ्गुहिङ्गूलसिन्दूरशिलाः साम्येन द्रावयेत् ॥ संमर्द्य काञ्चनद्रावैर्दिनं कृत्वाऽथ गोलकम् । तं भाण्डस्य तले कृत्वा भस्मभिः परिपूरयेत् ॥ अग्निं प्रज्वालयेद्गाढं द्विनिशं स्वाङ्गशीतलम् । उद्धृत्य सावशेषे तु पुनर्देयं पुटत्रयम् ॥ अनेन विधिना स्वर्णं निरुत्थं भस्म जायते । माक्षिकं नागचूर्णं च पिष्ट्वाऽर्कस्य रसेन हि ॥ हेमपत्रं पुटेनैव म्रियते क्षणमात्रतः"—इति हेममारणम् । अन्ये च निरुत्थभस्मप्रकारा ग्रन्थविस्तरभीत्या नोक्ताः ॥—

**हिङ्गूलेन च माक्षिकेण बलिना तुल्येन जम्भाम्भसा**
**लिप्तं रौप्यदलं पुटेन पटुना स्याद्भस्म मूषास्थितम् ॥ २३ ॥**

अथ रूप्यभस्मप्रकारमाह–हिङ्गूलेनेति । जम्भरसेन भावितेन हिङ्गूलेन तथा माक्षिकेण तथा बलिना गन्धकेन प्रलिप्तं रौप्यपत्रं कुम्भपुटेन सूकरपुटेन, पटुना महता वा; अत्र मूषास्थितं द्वित्रिवारपुटितं भस्म स्यात् । अत्र योगद्वयं हिङ्गूलेन माक्षिकेण, बलिना हिङ्गूलेन चेति; ग्रन्थान्तरसंवादात् । अत्र रूप्यं त्रिविधं—

सहजं खनिजं कृत्रिमं च । हिमाचलादिभूमौ यज्जायते तत्खनिजं, रामपादुकाधो निक्षिप्तं तत्कृत्रिमं, कैलासादिस्थं सहजम् । एतेषां लक्षणानि ग्रन्थान्तरतोऽनुसर्तव्यानि । अत्र शुद्धिस्तु पूर्वोक्तैव । अस्य ताम्रसीसादिमिश्रत्वादशुद्धस्य शुद्धिः कर्तव्या । तदुक्तम्,—"तारं त्रिवारं निक्षिप्तं तैले ज्योतिष्मतीभवे । खर्परे भस्मचूर्णाभ्यां परितः पालिकां चरेत् ॥ तत्र रूप्यं विनिक्षिप्य समसीससमन्वितम् । जातसीसक्षयं यावद्धमेत्तावत्पुनः पुनः ॥ इत्थं संशोधितं रौप्यं योजनीयं रसादिषु" इति । अस्यैव निरुत्थकरणार्थं शुद्धमाक्षिकस्नुहीक्षीराभ्यां लेपयित्वाऽन्धमूषायां दत्त्वा चतुर्दशपुटानि देयानीत्येके । द्रुतिप्रकारस्तु,—"शतधा नरमूत्रेण भावयेद्देवदालिकाम् । तच्चूर्णवापमात्रेण द्रुतिः स्यात्स्वर्णतारयोः"—इति । रूप्यस्यापक्वस्य प्रयोगो नास्तीति वक्ष्यति । भस्मापि ताम्रादिवन्न प्रयुज्यते व्यवहाराभावात्, श्वेतकुष्ठकर्तृत्वेन लोकप्रसिद्धेश्च, रसेषु प्रयोगस्तु प्रसिद्ध एव ॥ २३ ॥

अथ लोहस्य भस्मादिप्रकारमाह—

**शाणाकृष्टमयोरजस्त्रिदिवसं पिष्टं वरावारिणा**
**यद्वा रक्तपुनर्नवादलरसैर्यद्वाऽद्रिकर्णीरसैः ।**
**चाङ्गेरीसलिलैस्तथैव सलिलैर्वा नीरवानीरजै-**
**स्त्रिंशद्दन्तिपुटैः परैर्जलतरं स्याद्भस्म जम्बूप्रभम् ॥ २४ ॥**

टी०—अयोरजः लोहचूर्णम् । शाणः शस्त्रोत्तेजकं चक्रं, तस्माच्चुम्बकपाषाणादिना निःसारितम् । वरा त्रिफला तस्याः कषायः, रक्तपुनर्नवा वर्षाभूस्तज्जलैर्वा; अद्रिकर्णी गिरिकर्णी, तज्जलैर्वा; तथा चाङ्गेरी अम्लपर्णी तज्जलैर्वा; नीरवानीरो जलवेतसः, तद्रसैर्वा; त्रिदिवसं पिष्टं त्रिवारं भावितं; दन्तिपुटैर्गजपुटैः पक्वं भस्म स्यात् । कीदृशं? जम्बूप्रभं जलतरं च । अतोऽप्यधिकैरुत्कृष्टतरं भवति । यद्वाशब्देनैकैकौषध्या साधनीयमिति द्योत्यते । वाशब्दः समुच्चये । तेन एभिरेवौषधैर्यथा त्रिंशत्पुटानि भवन्ति, गजपुटानि प्रागुक्तानि, तथा भावना विधेयाः, भावनायां न नियमः, किं तर्हि पुटेष्वेव । त्रिदिवसशब्दस्तु भावनात्रयवाचकः नत्वेकैकदिनसाध्यभावनावाचकः । इदं च त्रैलोक्यचिन्तामणिमृगाङ्कादौ प्रसिद्धं, एवं सर्वत्रापि ज्ञेयम् । पुटं तु भावनां विना नास्तीति यथासंभवं भावना देयाः ॥२४॥

गन्धकेन भस्मप्रकारमाह—

**शाणोद्वान्तमयस्तु कान्तमथवा क्षिप्त्वाऽर्धलेलीतकं**
**दत्त्वाङ्घ्र्यंशरसं विमर्द्य सलिलैर्भृङ्गाद्रिकर्णीरसैः ।**

---

१ 'शुद्ध' इति पा० ।

**पक्कं सूर्यपुटैश्चतुर्दशदिनैरेरण्डपत्रावृतं**
**भस्म स्याद्गृहधूमधूसररुचि प्राग्धान्यराशिस्थितम् ॥ २५ ॥**

**टी०**—शाणेन चक्रविशेषेण पतितं तीक्ष्णं, तेनैव प्रकारेण पतितं कान्तं, लेलीतको गन्धकः, दत्तः अङ्घ्र्यंशः रसः पारदो यस्मिन्नेवंभूतं, विमर्द्य पूर्वं शुष्कमेव यावद्धूमनिर्गमं मर्दयित्वा, पश्चात्सलिलैः काञ्जिकादिभिः कन्यारसैर्वा, पश्चाद्भृङ्गस्वरसेन, अद्रिकर्णी गिरिकर्णी तस्याः स्वरसैर्विमर्द्य; सूर्यपुटैः पक्कं चतुर्दशदिनैश्चतुर्दशभावनाभिः, पश्चादेरण्डपत्रावृतं गोलकं कृत्वा धान्यराशिस्थितं, गृहधूमधूसररुचि अलिन्दधूमतुल्यं भस्म स्यात् । अत्र सूर्यपुटानि प्रातःकालादारभ्य सन्ध्याकालपर्यन्तं शुष्कमर्दनेन संपादनीयानि, भावना तु संध्यायां यथा आर्द्रता संपद्यते तथा कार्या । अत्र भावनायां नियमो नास्ति, मर्दनस्यैव भस्मसंपादकत्वात् । अथ लोहत्रयस्य भेदाः । तेषु मुण्डस्य त्रयो भेदाः—मृदु कुण्ठं कुठारं चेति; तीक्ष्णस्य खरसारहुन्नालतारावट्टवाजरकाललोहानीति षड्भेदाः; तथा भ्रामकचुम्बककर्षकद्रावकरोमकभेदात्कान्तस्य पञ्च भेदाः । एतेषां लक्षणानि ग्रन्थान्तरतोऽनुसन्धेयानि । एकमुखं द्विमुखं त्रिमुखं चतुर्मुखं पञ्चमुखं सर्वतोमुखमिति तेषां कान्तानामुत्तमाधमत्वं ज्ञेयम् । लक्षणं तु नाम्नैव व्याख्यातम् । भ्रामणादिकं तु अन्यलोहस्यैव; परीक्षा शुद्धिश्च पूर्वं प्रतिपादिता । अन्ये भस्मप्रकारा ग्रन्थान्तरतोऽनुसन्धेयाः । "जम्बीररससंयुक्ते दरदे तप्तमायसम् । बहुवारं विनिक्षिप्तं म्रियते नात्र संशयः ॥ तप्तं क्षाराम्लसंयुक्तं शशरक्तेन भावितम् । कान्तलोहं भवेच्छुद्धं सर्वदोषविवर्जितम् ॥ सुरदालीभवं भस्म नरमूत्रेण गालितम् । त्रिसप्तवारं तत्क्षारावापात्कान्तद्रुतिर्भवेत् ॥ देवदाल्या द्रवैर्भाव्यं गन्धकं दिनसप्तकम् । तस्य प्रवापमात्रेण लोहास्तिष्ठन्ति सूतवत् ॥ अक्षाङ्गारैर्धमेत्किट्टं लोहजं तु गवां जलैः । सेचयेत्तप्ततप्तं च सप्तवारं पुनः पुनः ॥ श्रेष्ठाजलैस्ततो भाव्यं पुटानि दश पञ्च च । त्रिफलामधुसंयुक्तं सर्वरोगेषु योजयेत्"—इति । लोहनिरूपणम् ॥ २५ ॥

अथ ताम्रभस्मप्रकारमाह—

**अङ्घ्र्यंशेन रसेन तुल्यतुलया लेलीतपिष्ट्या पुन-**
**र्लिप्त्वा ताम्रदलानि संस्तरचितान्यर्कस्य पक्कच्छदैः ।**
**भाण्डेऽरन्ध्रिणि तिन्तिणीविटपकत्वग्भस्मसंपूरिते**
**घस्रैकं परिपाचितानि शुचिना तीव्रं म्रियन्ते सकृत् ॥२६॥**

**टी०**—ताम्रतुल्यगन्धकेन चतुर्थांशपारदेन कृतकज्जलिकया ताम्रदलानि लिप्त्वा, एकमधः अर्कपत्रं दत्त्वा तदुपरि लेलीतचूर्णं दत्त्वा तदुपरि पत्रं तदुपरि पुनर्लेलीतकपिष्टिस्तदुपरि पक्कार्कपत्रं, एवं संस्तरेण स्थापितानि ताम्रपत्राणि, अम्लिकात्व-

ग्भस्मना संपूरिते भाण्डे, अरन्ध्रिणि छिद्रादिरहिते, ताम्रसंचयं दत्त्वा, तदुपरि पुनः भस्म पूर्णं कृत्वा, उपरि शरावं मृत्कर्पटानि च दत्त्वा, चुल्ल्यामारोप्य प्रहरचतुष्टयपर्यन्तमग्निं तीव्रं तीव्रतरं तीव्रतमं च दत्त्वा सकृन्म्रियन्ते। शुचिरत्र वह्निः ॥ २६ ॥

प्रकारान्तरेण ताम्रभस्माह—

**त्रिःक्षारैः पटुभिः स्नुगर्कजनुषा क्षीरेण पिष्टैर्यथा-**
**लाभं चाम्लगणद्रवेण दशधा ध्माता विलिप्यानले ।**
**शेफालीसलिलेऽम्लवर्गसलिले निर्वापिता भूरिशः**
**पूर्वप्रक्रियया त्रिगव्यलुलिता भस्म स्युरर्कच्छदाः ॥ २७ ॥**

**टी०**—पूर्वं गालितताम्रपत्राणि कृत्वा, त्रिःक्षारैः स्वर्जियवलोणारक्षारैः अथवा टङ्कणक्षारेण, पटुभिः सैन्धवादिभिः पञ्चलवणैः, स्नुह्यर्कक्षीरेण मर्दितैस्तथाऽम्लगणेन यथालाभमेकद्वित्र्यादिप्राप्तगणेन मर्दितैर्लिप्त्वा पश्चादनले ध्मातानि शेफालीसलिले निर्वापयेत् । अथवाऽम्लवर्गसलिले निर्वापितानि पुनः पुनः एवं दशधा ध्मात्वा निर्वापितानि, पूर्वप्रक्रियया संस्तरप्रक्रियया, भस्म कृत्वा, पश्चात्त्रिगव्येन दुग्धदधिघृतेन भावयित्वा संप्रदायादेकं पुटं दत्वा, अर्कच्छदास्ताम्रपत्राणि भस्म स्युः ॥२७॥

प्रकारान्तरेणाह—

**यद्वा तानि समेन गन्धकशिलातालेन गन्धेन वा**
**शिष्टेन द्वितयेन वाऽम्लसलिलैः पिष्टेन यैः कैरपि ।**
**यद्वा प्रस्तरगन्धकेन निबिडं लिप्तानि भाण्डान्तरे**
**क्षिप्त्वा संपुटितानि केवलमहःपक्वानि जीवन्ति न ॥ २८ ॥**

**टी०**—शुद्धानि ताम्रपत्राणि समेन गन्धकशिलातालेन लिप्त्वा, अथवा गन्धकेनैव लिप्त्वा, अथवा शिलाहरितालेनैव लिप्त्वा, येन केनचिदम्लेन लेपनं कृत्वा, पूर्ववद्धण्डिकामध्ये दत्वा पाकं कुर्यात् । "स्थूलभाण्डं तुषापूर्णं मध्ये मूषासमन्वितम् । वह्निना विहिते पाके तद्भाण्डपुटमुच्यते"—इति ज्ञेयम् । अथवा प्रस्तरगन्धको गन्धकविशेषः, तेन येन केनचित्प्रमाणेन निबिडतराणि लिप्त्वा, पूर्ववत् भाण्डान्तरे क्षिप्त्वा संपुटितं कृत्वा, अहःपक्वानि एकेन अह्ना पक्वानि, जीवन्ति न म्रियन्ते । अत्र तु पारदस्य सर्वथा अदानमेव, परन्तु वान्तिभ्रान्तिविवर्जितानि जायन्ते इति विशेषः ।

**नेपालं समरुद्रबीजमसुरस्तुल्यस्तयोस्तालकोऽ-**
**स्त्वार्धोऽस्त्वार्धशिलां विधाय विधिना श्लक्ष्णां परां कज्जलीम् ।**

लिप्त्वा ताम्रदलानि सम्यगनया भाण्डे पचेद्यामकं
यन्त्राध्यायसमुक्तशास्त्रविधिना तत्स्वाङ्गशीतं हरेत् ॥ २९ ॥
तत्तद्रोगहरानुपानसहितं ताम्रं द्विवल्लोन्मितं
संलीढं परिणामशूलमुदरं पाण्डुं च गुल्मं ज्वरम् ।
गुल्मप्लीहयकृत्क्षयाग्निसदनं मेहं च मूलामयं
दुष्टां च ग्रहणीं हरेद्ध्रुवमिदं तत्सोमनाथाभिधम् ॥ ३० ॥

टी०—ताम्रं द्विविधं-म्लेच्छं नेपालकं च; तत्र कृष्णाभासं म्लेच्छं, अतिशोणं मृदुलं च नेपालम् । तत्र ताम्रदोषाः—उत्क्लेदभेदभ्रमदाहमोहाः खलु दुर्हराः, अतः शोधनं सम्यक्कार्यं; तानि च ग्रन्थान्तरतः संशोधनानि ज्ञेयानि । सोमनाथप्रकारस्तु ग्रन्थान्तरे यथा,—"शुल्वतुल्येन सूतेन बलिना तत्समेन च । तदर्धांशेन तालेन शिलया च तदर्धया ॥ विधाय कज्जलीं श्लक्ष्णां भिन्नकज्जलसंनिभाम् । यन्त्राध्याय-विनिर्दिष्टगर्भयन्त्रोदरान्तरे ॥ कज्जलीं ताम्रपत्राणि पर्यायेण विनिक्षिपेत् । प्रपचेद्या-मपर्यन्तं स्वाङ्गशीतं समुद्धरेत्"[1]—इति । केचन मारितं ताम्रमम्लभावितं सूरणकन्दे दत्त्वा उपरि मृल्लेपं कृत्वा गजपुटे पचेदिति वदन्ति । इति ताम्रम् ॥ २९ ॥ ३० ॥

## अथ सीसकम् ।

सीसं काष्ठकृशानुना पटुघटभ्राष्ट्रे द्रुतं कन्यका-
मूलैर्घृष्टमिभाशनार्कबहुपाद्ब्रह्मद्रुमूलायसाम् ।
दण्डेनान्यतमस्य यावदवधि स्यात्पिष्टिका तत्पुनः
सिन्दूरारुणमुद्धृतं च शिलया वस्वंशया योजितम् ॥ ३१ ॥
कन्यावारिविभावितं पुनरपि प्राक्प्रक्रियोपाहृतं
त्रिः स्याद्भस्म करीषवह्निपुटितं प्रान्तेऽतिमन्दं सकृत् ।

टी०—पटुघटभ्राष्ट्रे दृढघटखर्परे काष्ठाग्निना द्रुतं सीसं पचेत् । तत्र कन्यामूलं दत्त्वा पश्चादिभाशनः पिप्पलः, अर्को रुपिका, बहुपान्यग्रोधः, ब्रह्मद्रुः पलाशः, एतेषां मूलानि, अयः लोहं, तेषामन्यतमस्य दण्डेन दर्व्या यदवधि पिष्टिका स्यात् तदवधि घृष्टं कुर्यात् । सिद्धस्य वर्णमाह-तत्पुनः सिन्दूरारुणं भवति । ततः उद्धृतं तस्मात्पात्रान्निष्काशितं, अष्टमांशया मनःशिलया एकीकृतं, कन्यावारिणा मर्दितं

१ अस्याग्रे 'एतस्या एव खल्वे पिष्टिं विधाय काचकूप्यां वालुकायन्त्रे द्वादशप्रहरं तीव्रवह्निं दत्त्वा रसभस्माकृति ताम्रं जायते' इत्यधिकः पाठः क्वचिदुपलभ्यते ।

सप्तवारं, शरावसंपुटे स्थापयित्वा, करीषवह्निपुटितं करीषं शुष्कगोमयं तस्य वह्निना गजपुटे पुटितं, प्रान्तेऽतिमन्दं पुटितं भस्म स्यात् ॥ ३१ ॥—

अमुमेव क्रमं वङ्गेऽप्यतिदिशति—

**कन्यामूलविघट्टनारहितया वङ्गोऽपि भस्मीभवे-**
**त्पूर्वप्रक्रिययैव मानसशिलास्थाने तु दत्तालया ॥ ३२ ॥**

**टी०**—कन्यामूलेन विघट्टनं वङ्गे नास्ति, मनःशिलास्थाने हरितालदानं, पूर्वप्रक्रियया भावनपुटनप्रक्रियया वङ्गो भस्मीभवेत् ॥ ३२ ॥

प्रकारान्तरेण वङ्गमाह—

**वङ्गे घर्षणकाल एव भिषजः पीतायवानीरजो**
**न्यस्यन्ति क्षणशः शिलाजतु तथा भस्माऽप्यपामार्गजम् ।**

**टी०**—घर्षणकाले पलाशदण्डादिना घर्षणे क्रियमाणे, पीता हरिद्रा, यवानी यवसाह्वा, अनयो रजः; क्षणशः क्षणं क्षणं यावत्पिष्टिर्भवति तावद्भिषजो न्यस्यन्ति क्षिपन्ति । भस्मनः शुद्ध्यर्थं शिलाजतु क्षिपन्ति । शिलाजतुश्चात्र श्वेतो ग्राह्यः । तथेति अपामार्गजं भस्म घर्षणकाले वा क्षिपन्ति । अत्र भस्म एकीकृत्य, तदुपरि शरावं दत्त्वा, तीव्रतरं वह्निं कृत्वा, यथाऽङ्गारवर्णं भवति तथा कर्तव्यं; पश्चात्स्वाङ्गशीतं कुर्यात् ॥—

प्रकारान्तरेण वङ्गभस्माह—

**लिप्त्वा रङ्गदलान्यरुष्कपिशितैर्भाण्डे तु चिञ्चात्वचो**
**भूत्याः संस्तरसंस्थितानि पुटतः कुर्वन्ति भस्मान्यपि ॥३३॥**

**टी०**—लिप्त्वेति रङ्गदलानि वङ्गदलानीत्यर्थः, अरुष्कपिशितं भल्लातोपरिमांसतैलं, तेन लिप्त्वा, पश्चाच्चिञ्चात्वग्भस्मसंस्तरस्थितानि पुटतः भस्मानि कुर्वन्ति । संस्तरस्तु भस्म दत्त्वा तदुपरि पत्रं तदुपरि भस्म तदुपरि पत्रमेवं क्रमेण कर्तव्यः । पुटं चात्र गजसंज्ञकमेव । वङ्गनागयोर्भस्म अष्टमांशतालकशिलाभ्यां युक्तं पलाशकन्यारसैर्मर्दयित्वा चक्रिकां कृत्वा मृत्संपुटान्तर्गतं भस्ममध्ये संरुध्य गजपुटत्रयेण निरुत्थं भस्म भवति । दश पुटानि दद्यात् । खर्परे अपामार्गादिरक्षां दत्त्वा तन्मध्ये वङ्गचक्रिकां दत्त्वा तदुपरि रक्षां प्रभूतां दत्त्वा पुटमध्ये दद्यात् ॥ ३३ ॥

प्रकारान्तरेण वङ्गभस्माह—

**यद्वैतस्य दलानि विंशतिगुणे पिण्याकचूर्णेऽतसी-**
**संभूते शणपट्टवर्तिनि पुनस्तद्वद्यवान्यामपि ।**
**कीर्णानि क्रमशो निबध्य सुदृढं रज्ज्वा गजाह्वे पुटे**
**स्युर्भस्म, त्रपुणि स्थिते तु पुटतोऽपक्केऽयमेव क्रमः ॥ ३४ ॥**

टी०—एतस्य दलानि वङ्गपत्राणि, शणपट्टोपरिवर्तिनि अतसीपिण्याकचूर्णे, क्रमशः कीर्णानि कृत्वा पूर्वं शणपट्टोपरि अतसीपिण्याकचूर्णं तदुपरि वङ्गपत्राणि पुनस्तदुपरि शणपट्टं तदुपरि अतसीपिण्याकचूर्णं तदुपरि वङ्गपत्राणि इत्येवंक्रमेण स्थापनं कार्यं; एवं यवान्यामपि क्रमः कार्यः । पश्चाद्रज्ज्वा सुदृढं बद्ध्वा, गजाह्वे पुटे पचेत् । तत्र पुनः त्रपुण्यपक्के स्थिते अयमेव क्रमः पुनः कार्यः ॥ ३४ ॥

**शेषाणां विकृतात्मनां रजतवद्वा शुल्बवत्प्रक्रिया**
**लोहानामरिलोहमारणमसत्कृत्यं तु नोक्तं मया ।**

टी०—पित्तलकांस्यवर्तानां लोहानां विकृतात्मनां परस्परसंसृष्टानां रजतादिवत् प्रक्रिया कार्या । तत्र पुटे पूर्वोक्तक्रम एव कार्यः । केचन अरिलोहेन लोहस्य मारणमिच्छन्ति, तन्मतं दूषयति–लोहानां अरिलोहमारणमसत्कृत्यं भवति 'अरिलोहेन लोहस्य मारणं दुर्गुणप्रदम्' इति वचनात् ॥—

**सर्वेषां मतमेतदेव भिषजां यत्तारसीसोद्भवं**
**पार्थक्येन गुणावहं न भसितं प्रोक्तोपलोहस्य च ॥ ३५ ॥**

प्रसंगसंगात् केषांचिद्भस्मानि प्रत्येकमेव प्रयोज्यानि, केषांचित्संमिश्रयित्वा प्रयोज्यानीत्याह—सर्वेषामिति । सर्वेषां भिषजां मते तारसीसोद्भवं भस्म पार्थक्येन गुणावहं न भवति । तथा उपलोहानां पित्तलकांस्यादीनां यद्भसितं तत्पार्थक्येन प्रयोगे योज्यं न भवति, अगुणत्वात्; अर्थादितरेषां लोहताम्रवङ्गसुवर्णानां पृथग्भस्म प्रयोज्यमित्युक्तं भवति ॥ ३५ ॥

इदानीं पक्वानामपक्वानां च लोहानां गुणान्वक्तुं प्रथमतः पक्वापक्वस्य सुवर्णस्य गुणानाह—

**पक्वं हेम रसायनं विदुरथापक्वं तु सद्यो विष-**
**प्रध्वंसि क्षयिबृंहणं वमिहरं वर्ण्यं ज्वरिभ्यो हितम् ।**
**आलीढेषु विमृश्य वादिभिरुपक्षिप्तोऽस्ति दोषो गुणः**
**प्रोक्तः प्राकृतवैकृतेषु तु मया शेषेष्वपक्वेषु च ॥ ३६ ॥**

टी०—रसायनं वयसः स्थापनं, "यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्" इति वचनात् । अथ स्वर्णभस्मगुणनिरूपणानन्तरं; अपक्वं पाषाणादिना घर्षणेन द्रवरूपं, अथवाऽतिसूक्ष्मवरकाख्येन सुवर्णपत्रेण मधुना सह गृहीतं यत् सुवर्णं तत्सद्यो विषघ्नं भवति, क्षयिणां धातुवृद्धिकरं, वान्तिनाशकं, कान्तिजनकं, ज्वरिणां च हितं

---

१ अत्र 'किं कार्यं भसितस्य चेच्छृणु रसादिष्वेव योज्यं हि तत्ताद्दृक्सद्वचनानुरोधबलतः प्रोक्ता व्यवस्था इति' इति आयुर्वेदप्रकाशे पाठान्तरमुपलभ्यते, तदेव समीचीनमिति भाति ।

विदुः उक्तवन्तः । अतोऽतिरिक्तेषु प्राकृतवैकृतेषु कृत्रिमाकृत्रिमलोहेषु अपक्वेषु सेवितेषु सत्सु वादिभिः विमृश्य विचार्य गुणदोषवर्णनमुपक्षिप्तमस्ति । अतो मया अपक्वेषु शेषेषु सुवर्णव्यतिरिक्तेषु गुणो दोषो वा उपक्षिप्तो नास्ति, अपक्वानां सर्वथा प्रयोगानर्हत्वात् । न चापक्वानां गुणकथनं व्यर्थमिति वाच्यं ? तस्यापक्वभक्षणनिषेधे तात्पर्यादिति । यच्च ताम्रोदरपक्वस्य विषादौ प्रयोगः स तु क्वाचित्कः, पुनर्वान्त्यापादकत्वाच्च न विचार्यते ॥ ३६ ॥

अथ पक्वानां गुणाः, तत्र कान्तस्याह—

**शोफं हन्ति हलीमकं च जरसं पाण्डुं च पाण्डुक्षयं**
**भूतिः कान्तिभवा, ततस्तु कियता न्यूनैव तीक्ष्णोद्भवा ।**

टी०—कान्तभवा भूतिः भस्म; शोफं श्वयथुं, हलीमकं पाण्डुविशेषं, जरसं जरारोगं, पाण्डुं पाण्डुरोगं, पाण्डुक्षयं पाण्डुजनितक्षयं 'कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति' इति वचनात्; एतान् हन्ति । ततः कियता न्यूनैव कियता गुणेन न्यूनैव तीक्ष्णोद्भवा भूतिः ॥—

**कासश्वासिनि शूलिनि ज्वरिणि हृद्रोगिण्युपश्लोकिता**
**भूतिः शुल्बभवा, तु वङ्गजनिता मेहिन्यसन्मूत्रिणि ॥ ३७ ॥**

ताम्रभस्मगुणानाह—कासेत्यादि । शुल्बभवा भूतिः कासादियुक्ते रोगिण्युपश्लोकिता कथिता । तु पुनः वङ्गजनिता भूतिः मेहिनि मूत्राघातयुक्ते पुरुषे च हिता भवति । रजतसीसयोः केवलयोस्तु विशेषव्याधावाचार्यैरनभिधानात् गुणा नोक्ताः, वैद्यव्यवहारबाहुल्याच्च । एते तु प्राधान्याद्विशेषगुणा एव, अन्ये च गुणाः ग्रन्थान्तरतो ज्ञेयाः । वङ्गसीसयोर्द्रुतिः पारदादौ नोपयुज्यते, न वा वज्रादौ उपयुज्यते, अतो नोक्ता । यदि कर्तव्या तर्हि सुवर्णादिवत्कार्या । पित्तलं तु द्विविधं भवति—रीतिकासंज्ञं, काकतुण्डीसंज्ञं च । अस्याः शुद्धिस्तु—"तप्तं क्षिप्तं तु निर्गुण्डीरसे श्यामारजोऽन्विते । ताम्रवन्मारणं तस्याः कृत्वा सर्वत्र योजयेत्"—इति । सुवर्णरीतिकाचूर्णमन्नादिना छागेन भक्षितं तद्विष्ठां खर्परे लिप्त्वा पश्चाद्दग्धं खर्परं रीतिं मुञ्चति, तां रीतिकामेकीकृत्यावर्त्य मुद्रिका कृता चतुर्दशवर्णसुवर्णतुल्या भवति । एतस्य भस्म तु निम्बकाष्ठचूर्णेन सह भल्लाततिलब्रह्मबीजाजमोदाग्निभिः सेवितं जन्तुघ्नं श्वेतकुष्ठघ्नं च भवति, एवं कांस्यम् । अष्टभागताम्रं द्विभागकुटिलमेकत्र द्रावितं कांस्यं भवति । तत्कांस्यं सौराष्ट्रभवं शुद्धं भवति । तद्गुणाश्च कृमिघ्नत्वादयो ज्ञेयाः । कांसस्य शोधनं गवां मूत्रे कार्यं, पश्चाद्गन्धकतालाभ्यां पञ्चभिर्गजपुटैः सिद्धं भवति; तद्भस्म रोगेषु प्रयोज्यम् । पञ्चलोहं वर्तसंज्ञं भवति । तस्य नाम पञ्चरसमिति । तच्च रीत्यर्कनागवङ्गेभ्यः समुत्पद्यते । तद्भाण्डमध्ये व्यञ्जनसूपादि साधनीयम् । अश्वमूत्रे तप्तं क्षिप्तं शुध्यति । गन्धकतालेन च म्रियते । रोगांस्तु प्रागुक्तान् हन्ति । घृतवर्ज्यं कांस्ये सर्वं पाच्यम् ॥ ३७ ॥

अथ महारसानां शुद्ध्यादि निरूपयितुं महारसानां नामान्युद्दिशति—

**वैक्रान्तं गगनं शिलाजचपलौ तापीजतुत्थे तु ष-**
**ण्णाम्ना नाम महारसाः**

टी०—वैक्रान्तोऽनेनैव नाम्ना प्रसिद्धः । गगनमभ्रकः । शिलाजं शिलाजतु । चपलेति नाम्ना प्रसिद्धश्चपलः । तापीजं माक्षिकम् । तुत्थं मयूरग्रीवम् । एते षण्महारसाः । अन्ये तु—"अभ्रं वैक्रान्तमाक्षीकविमलाऽद्रिजशस्यकम् । चपलो रसकश्चेति ज्ञात्वाऽष्टौ संहरेद्रसान्"—इति अष्टावाहुः । तत्र विमलस्य माक्षिकान्तःपातित्वात्, खर्परस्य तुत्थान्तःपातित्वात् षण्णामेव ग्रहणं कृतं ग्रन्थकारेण ॥—

**पुनरयं वैक्रान्तकः सप्तधा ।**
**यद्यप्यस्ति तथाऽपि कृष्णसुषमं तद्वच्मि सर्वात्मना**
**शेषान्न प्रकृतोपयोगविरहाच्छुद्धस्तु कृष्णो घनः ॥ ३८ ॥**
**षट्कोणो वसुकोणकोऽपि मसृणो**

टी०—तत्र वैक्रान्तस्य भेदानाह—पुनरयं वैक्रान्तक इति । विकृन्तति विकर्तयति वा लोहानिति वैक्रान्तः । स तु सप्तधेत्याह—सप्तधेति । यद्यपि सप्तधा अस्ति तथाऽपि कृष्णसुषमं कृष्णाभं वैक्रान्तकं वच्मि निरूपयामि । शेषान् प्रकृतोपयोगविरहाद्रसेषु मृगाङ्कादावनुपयोगात्, ते नोच्यन्त इत्यर्थः । तत्र शुद्धस्य परीक्षामाह—शुद्ध इति । तु इति वाक्यभेदे । कृष्णः शुद्धनिर्मलः, घनः भारवान्, वसुकोणकोऽष्टकोणकः, अपिशब्दः समुच्चयार्थः, मसृणश्चिक्कणः, स श्रेष्ठो भवति ॥ ३८ ॥—

**मूत्रे कुलित्थोदके**
**स्नुग्रम्भोत्तरवारुणीपयसि च स्विन्नस्त्रिघस्रं शुचिः ।**
**मूत्रेऽश्वस्य विभावितस्त्रिचतुरैर्ध्मातः पुटैर्मारितो**
**योज्यो वज्रपदे सुबुद्धिभिरयं यद्वज्रतुल्यो गुणैः ॥ ३९ ॥**

टी०—तस्य शुद्धिमाह—मूत्र इति । उदकं क्वाथः । उत्तरवारुणीति उत्तरणीति प्रसिद्धा । एतेषां त्रयाणां रसे दुग्धे वा चूर्णीकृत्य त्रिदिनं स्वेदनं कुर्यात् । पश्चाच्छुचिः निर्मलः । अश्वस्य मूत्रैर्भावितः पुनर्ध्मातः सन् अश्वमूत्रे प्रक्षिप्तः, पश्चाद्गन्धकलकुचाम्लैर्भावयित्वा, गजाख्यैः पुटैर्मारितः, भस्मनो रेखापूर्णता लघुता च यावद्भवति तावत्त्रिचतुराणि पुटानि देयानि, पश्चाद्वज्रपदे वज्रस्थाने सुबुद्धिभिर्योज्यः, यत् यस्मात्कारणाद्गुणैर्वज्रतुल्यो भवति; इति वाक्यार्थः । अत्रेदं ज्ञेयम्—महिषासुरस्य रुधिरं यत्र यत्र पतितं तत्र तत्र वज्राकारं जातं, तस्य नाम वैक्रान्त इति; स च विन्ध्यस्य दक्षिणोत्तरभागयोस्तिष्ठति । स च श्वेतादिभेदेना-

ष्ट्रप्रकारकः । तत्र कृष्णस्यातिश्रेष्ठत्वं; सुवर्णादिकरणे पीतः, रौप्यादिकरणे श्वेतः, मरकतप्रभो रक्तश्च सर्वार्थसिद्धिदः, अन्ये तु निष्फलाः । वैक्रान्तग्रहणं तु भैरवविनायकपूजापुरःसरं कर्तव्यम् । "वैक्रान्तो वज्रसदृशो देहलोहकरो मतः । विषघ्नो रसराजश्च ज्वरकुष्ठक्षयप्रणुत्"–इति । अस्य भस्म तु पूर्वरसैर्भावितस्य गन्धकेनैव कार्यं, विशेषतस्तु हयमूत्रेण । अत एवोक्तम्,—"कुलित्थक्काथसंस्विन्नो वैक्रान्तः परिशुध्यति । म्रियतेऽष्टपुटैर्गन्धनिम्बुकद्रवसंयुतः"–इति । सत्त्वपातनप्रकारस्तु,—"सत्त्वपातनयोगेन मर्दितश्च वटीकृतः । मूषास्थो घटिकाध्मातो वैक्रान्तः सत्त्वमुत्सृजेत्"–इति । रसायनानि मृगाङ्कादीनि तु सिद्धानि । द्रुतिपातनं तु सर्वपाषाणसत्त्वानां द्रुतिवत्कार्यम् ॥ ३९ ॥

अथ गगनस्य भस्मादिप्रकारमाह—

**मण्डूकाहिपिनाकवज्रविभिदा ख्यातश्चतुर्धाऽभ्रकः**
**प्रत्येकं स पुनस्तथैव विशदः पीतोऽरुणः श्यामलः ।**
**यस्तत्रोत्प्लवते कृशानुशकटीध्मातः स आद्योऽपरः**
**फूत्कारी स तथैव यः स विसृजत्यग्नौ पिनाकश्छदान् ॥४०॥**

टी०—गगनं चतुर्धा–मण्डूकनागपिनाकवज्रभेदादभ्रकश्चतुर्धा ख्यातः । स पुनः श्वेतादिभेदेन प्रत्येकं चतुर्धा ज्ञेयः । विशदः श्वेतः । तत्र मण्डूकस्य लक्षणमाह—य इति । कृशानुर्वह्निस्तस्य शकटी हसन्ती, तस्यां ध्मातः उत्प्लवते स मण्डूक आद्यो भवति । यश्चापरः फूत्कारी भवति यः फूत्कारशब्दानग्नौ करोति स अहिः नागः; तथैव यः छदान् पत्राणि अग्नौ विसृजति स पिनाकः ॥ ४० ॥

तत्र त्रयाणामनिष्टत्वादसत्कल्पत्वमाह—

**उक्तं यत्तदसत्रयं त्रयमपि श्वेतादिवज्राभ्रका-**
**द्वज्रव्योम तदामनन्ति भिषजः प्राग्वैकृतैर्वर्जितम् ।**
**स्निग्धं कज्जलकालकान्ति सुकरोल्लेखच्छदं गुर्वपि**
**स्वच्छं वज्रवियत्,**

टी०—अवधित्वे पञ्चमी; श्वेतादिवज्राभ्रकात् त्रयमुक्तं तत् असत्, यदि स्यात्तदा दोषकर्तृत्वात्त्याज्यमेव । तत् भिषजः वज्रव्योम आमनन्ति यत्प्रागुक्तैर्वैकृतैर्वर्जितम् । तदुक्तम्,—"वज्राभ्रं वह्निसंतप्तं निर्मुक्ताशेषवैकृतम् । देहलोहकरं तत्तु सर्वरोगहरं परम्"–इति । तल्लक्षणमाह—स्निग्धमिति । स्निग्धं मसृणं, तदेवाह—कज्जलेत्यादि । कज्जलवत्काला कान्तिर्यस्य तत् । सुकरं नखादिभिः उल्लेख उल्लेखनं येषां, तादृक्छदा यस्मिन् तत् । गुरु भारवत् । वियद्वज्रं कृष्णाभ्रकमित्यर्थः । श्वेतपीतरक्तवज्राभ्रकाणां सत्त्वेऽपि रसादिष्वनुपयोगात् वज्रं कृष्णाभ्रकमेवोक्तम्॥—

तस्य शुद्धिप्रकारमाह—

प्रतप्तमनले निर्वापितं सप्तधा ॥ ४१ ॥
गोदुग्धत्रिफलाऽऽरनालसुरभीमूत्रे यथास्वं शुचि

टी०—अनले प्रतप्तं पश्चाद्गोदुग्धादिषु यथालाभं सप्तधा निर्वापितं शुद्धिमेति ॥ ४१ ॥—

श्लक्ष्णं व्रीहिभिरेकतः समतुलैरूर्णापटे घर्षयेत् ।
ऊर्णास्रंसितकाञ्जिकादपहृतं तत्षोडशांशेन वा
वस्वंशेन सुटङ्कणेन मिलितं संमर्दितं भावितम् ॥ ४२ ॥
दुग्धैरर्कभवैश्च वास्तुकरसैर्वा कासमर्दद्रवै-
र्मत्स्याक्षीसलिलैश्च गन्धवतिकाद्रावैश्च शिग्रुद्रवैः ।
चक्रीकृत्य तदर्कपत्रपिहितं पक्वं गजाह्वैः पुटै-
र्यावच्चन्द्रकमभ्रभस्म भवति प्रायः सुपीतारुणम् ॥ ४३ ॥
गाङ्गेयीवटदुग्धमूलसलिलैः पीतारुणावारिणा
तत्केचित्तु विभावयन्ति चरमे द्वित्र्येकपाकान्तरे ।
वर्णार्थं, त्वथ तद्वपुर्बलकरं वृष्यं प्रमेहापहं

टी०—धान्याभ्रकप्रकारमाह—श्लक्ष्णमित्यादि । श्लक्ष्णं मृदुलं, समतुलैः समभागैर्व्रीहिभिर्मिश्रयित्वोर्णापटे घर्षणं कार्यं, घर्षणं तु काञ्जिकमध्ये । ऊर्णास्रंसितमूर्णावस्त्रगालितं; पश्चात्काञ्जिके अधस्तात्स्थितं गृहीत्वा, षोडशांशेनाथवा वस्वंशेनाष्टमांशेन टङ्कणक्षारेणैकत्र मर्दितं, पश्चादर्कभवैर्दुग्धैर्भावितं, ततो वास्तुकादिरसैर्भावितं, पश्चाल्लघुचक्रिकाकारं कृत्वा, अर्कपत्रेषु दत्त्वा, गजाह्वैः पुटैर्यावच्चन्द्रिकाविरहितं भवति तावत्पुटेत् । तद्भस्म बाहुल्येन पीतारुणं भवति । यदि न भवेदारुण्ये काङ्क्षा चेत् तर्हि वर्णार्थं गाङ्गेयी नागबला मुस्ता वा, वटदुग्धं न्यग्रोधदुग्धं, अथवा तस्य मूलसलिलैः; तथा पीता हरिद्रा, अरुणा मञ्जिष्ठा, अनयोर्वारिणा क्वाथेन; भावयन्ति केचित् । द्वित्र्येकपाकान्तरे चरमपुटद्वये त्रये वा उर्वरिते भावना देयेत्यर्थः । तद्गुणानाह—तदिति । वपुर्बलकरं शरीरपुष्टिकारि, वृष्यं शुक्रप्रदं, मेहादिनाशकम् । अन्येऽपि गुणा ग्रन्थान्तरतो ज्ञेयाः । अत्रेदं ज्ञेयं, अभ्रकं तु खनेः सकाशात् पुरुषप्रमाणं गर्तं कृत्वा ग्राह्यं, तत्र भारवत्ससत्त्वं फलप्रदं भवति, निःसत्त्वं निर्भारं निष्फलं भवति । यद्यपि चतुर्विधमपि रसायने उक्तं तथाऽपि कृष्णवर्णाभ्रं कोटिकोटिगुणावहं भवति । धातुवादिभिस्तु "पीतं पीतक्रियासूक्तं श्वेतं श्वेतक्रियासु च–" इत्युक्तम् । चन्द्रिकायुक्तसेवने प्रमेहादिदोषा भवन्ति, अतः सर्वगदेषु निश्चन्द्रिकमेव सेव्यम् । तच्च शोधितमेव कर्तव्यम् । धान्याभ्रकलक्षणं

तु—"चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं तु काञ्जिके । निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते"–इति । पुटं तु त्रिहस्तप्रमाणं द्विहस्तं वा कार्यम् । सत्त्वप्रकारस्तु,—कासमर्दकतन्दुलीयकवासापुनर्नवाकाण्डवल्लीहंसपादीमत्स्याक्षीभिर्भावयित्वा शोषयित्वा, पलमात्रगोधूमचूर्णं क्षुद्रमत्स्यटङ्कणादिकं दत्त्वा, मर्दयित्वा पश्चाच्छोषयित्वा, महिषीगवाजगजाश्वविट्पञ्चकं गृहीत्वा तेन सह मर्दयित्वा, तिन्दुकप्रमाणान् गोलकान्कृत्वा, अधःपातनकोष्ठ्यां ध्मात्वा सत्त्वं निपातयेत् । तस्मात्किट्टं गृहीत्वा स्फोटयित्वा क्षुद्रकणकान् गृहीत्वा, पश्चाद्गोमयेन टङ्कणेन सह विमर्दनं विधाय, गोलकान् विधाय, ध्मात्वा, पुनः किट्टात् रवकान्निष्कास्य, तान् घनकांस्यसदृशान् रवकान् कृत्वा, काञ्जिकाम्लैः शोधयित्वा, मूषामध्ये दत्त्वा, अन्धमूषीकृत्वा, सम्यक् पुनर्धमेत् । तत्सत्त्वं चूर्णं कृत्वा, गोघृतेन खर्परे भृष्ट्वा, यावत्तृणदाहो भवति तावद्भर्जनं कृत्वा, पश्चाद्वटस्कन्धकषायगन्धकेन संमर्द्य, पुनस्त्रिफलादिभिः पूर्वोक्तादिभिर्भावयित्वा, विंशतिवारं षष्टिवारं शतवारं पुटयित्वा सत्त्वभस्म संपाद्यम् । तच्च सर्वेषु रोगेषु योजनीयम् । महाक्षुत्करं च भवति । अन्येऽपि प्रकारा ग्रन्थान्तरतो ज्ञेयाः । द्रुतिप्रकारस्तु शास्त्रे दृष्टोऽपि न जायत इत्युपेक्षितः, "द्रुतयो नैव निर्दिष्टाः शास्त्रे दृष्टा अपि दृढम् । विना शम्भोः प्रसादेन न सिध्यन्ति कदाचन"–इति वचनात् । अनुपानं चात्र व्योषविडङ्गमधुघृतादि । प्रमाणं च वल्लमात्रं क्षयादिषु योज्यम् ॥ ४२ ॥ ४३ ॥—

प्राग्दर्शितशिलाजतोः प्रकारमाह—

**स्वातन्त्र्यात्तु शिलाजतु द्विरचलोद्भूतं तथोषोद्भवम् ॥ ४४ ॥**
**तत्राद्यं शितिकान्ति काञ्चनघनश्लक्ष्णं जले शैवल-**
**च्छायं स्यादनले तु लिङ्गमिव यद्गोमूत्रगन्धीरितम् ।**

**टी०**—अचलोद्भूतं तथोषोद्भूतं एवं द्विः शिलाजतु भवेत् । अचलः पर्वतः । उषा क्षारमृत्तिका । तत्राद्यो द्विविधः ससत्त्वो निःसत्त्वश्च । तत्राद्यो गुणवत्तरः । शिलाजतुलक्षणं तु वाग्भटेनोक्तम्,—"ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत् । हेमादिषड्धातुरसं प्रोच्यते तच्छिलाजतु"–इति । सुवर्णादिगिरयस्तु तत्तत्खनित्वेन ज्ञेयाः । तत्परीक्षा तु,—"क्षिप्तमग्नौ न दह्येत लिङ्गाकारमथापि च । जले जटिलतां याति श्रेष्ठमेतच्छिलाजतु"–इत्यादि ज्ञेयम् । तत्र लक्षणमाह—तत्राद्यमिति । आद्यं गोमूत्राख्यम् । शिति कृष्णम् । अन्यत्स्पष्टम् । लिङ्गमिव ऊर्ध्वं भवति ॥ ४४ ॥—

तस्य शोधनमाह—

**दुग्धेन त्रिफलाजलेन सुरभिमूत्रेण तप्तेन त-**
**द्धौतं शुध्यति वाऽयसे पुरजलैर्द्वित्रिक्षणैः पाचितम् ॥४५॥**

टी०—दुग्धादिभिस्तप्तैर्धौतं प्रक्षालितं शुध्यति; अथवा आयसे पात्रे पुरजलैर्गुग्गुलुजलैर्द्वित्रिक्षणैः क्षणोऽत्र घटिका, तावत्पर्यन्तं पाचितं शुध्यति । अन्यप्रकारस्त्वयम्—गोमूत्रगन्धि भारवत्तरं शिलाजतु गृहीत्वा, पश्चादत्युष्णजलमध्ये विलीनं कृत्वा, आयसे पात्रे स्थापयित्वा, सूर्यकिरणैः संतप्तं यदा कृष्णवर्णं जलमुपरि भवति तावदेव तत् कृष्णं जलं द्वितीयपात्रे निष्कास्य, अधःस्थितं जलं पुनरुष्णे स्थापयेत्, पुनरुपरि आगतं कृष्णं जलं तस्मिन् द्वितीयपात्रे गृहीत्वा, अधश्चारुणं जलं पुनः पूर्वपात्रे स्थापयेत्, पुनश्च प्रथमपात्रादागतं कृष्णं जलं द्वितीयपात्रे दद्यात्, एवं त्रिवारं सर्वं कृष्णं जलं गृहीतं भवति; तदा त्रिफलाजलेन गोदुग्धेन गोमूत्रेण स्वल्पं स्वल्पं भावयेत्; पुनरप्यसनादिगणेन शालसारादिगणेन वा अन्यैश्च दिव्यौषधिभिर्वाऽष्टावशेषकषायेण वारं वारं भावयित्वा सिद्धं काचपात्रे स्थापयेत्, तस्यागुर्वादिधूपदानं च कुर्यात्, एवं सिद्धो भवति । अयं प्रकारस्तु चरकवाग्भटादौ दर्शितः । स च सर्वानुपानैः सर्वरोगेषु योज्यः "सर्वेषु रोगेषु शिलाह्वयं च"—इति वचनात् विशेषस्तु "बस्तिजेषु गिरिजम्"—इति वचनात् ॥ ४५ ॥

गुणानाह—

**मेदश्छेदकरं दृषद्विदलनं मूत्रामयोत्सादनं**
**मेहोन्माथि तदाहुरस्य भसितं स्याद्भस्मसाधारणम् ।**

टी०—मेदश्छेदकरमित्यादि । दृषद् पाषाणः, अश्मरीति यावत् । अस्य भसितमिति भस्मसाधारणं स्यात् भस्माकारं भवति । अत एव,—"रसोपरससूतेन्द्ररत्नलोहेषु ये गुणाः । ते वसन्ति शिलाधातौ जरामृत्युजिगीषया"—इति । भस्मप्रकारस्तु,—"शिलया गन्धतालाभ्यां मातुलिङ्गरसेन च । पुटितो हि शिलाधातुर्म्रियतेऽष्टगिरिण्डकैः"—इति । गिरिण्डकमत्र अरण्यच्छाणं; तदुक्तम्,—"पिष्टकं छगणं छाणमुपलं चोत्पलं तथा । गिरिण्डोपलसाटी च सुशुष्कच्छगणाभिधाः"—इति । मनःशिलादिदानं च षोडशांशेन । सत्त्वप्रकारस्तु,—"पिष्टं द्रावणवर्गेण साम्लेन गिरिसंभवम् । दत्त्वा मूषोदरे रुद्ध्वा गाढं ध्मातं हि कोकिलैः ॥ सत्त्वं मुञ्चेच्छिलाधातुः स्वखनेर्लोहसंनिभम्"—इति । कोकिलाः शिखित्राः "शिखित्राः पावकोच्छिष्टा अङ्गाराः कोकिला मताः"—इति । अत्र विशेषः—जलेन सिक्ताश्चेत्कोकिलाः, अन्यथा तु पावकोच्छिष्टाः । अत्र द्रावकं च क्षाराम्लादिकम् । सत्त्वलक्षणं तु,—"क्षाराम्लद्रावणैर्युक्तं ध्मातं यद्वस्तु कोष्ठके[1] । यत्तत्र निःसृतः सारः सत्त्वमित्यभिधीयते"—इति । भस्मलक्षणं तु—"मृतं तदिति यत्तोये लोहं वारितरं भवेत्"—इति ॥—

द्वितीयशिलाजतुप्रकारमाह—

**वह्न्युत्तेजनमुज्ज्वलं यदपरं मूत्रामयिभ्यो हितं**

---

१ 'आकरकोष्ठके' 'पावककोष्ठके' इति च पाठान्तरद्वयमुपलभ्यते ।

टी०—वह्न्युत्तेजनमिति । यदपरं श्वेतं शिलाजतु तद्वह्न्युत्तेजनं वह्निप्रदीपकं; अत्र जठराग्निर्न ग्राह्यः, किं तु अग्निशस्त्राणि ग्राह्याणि; तत्रत्याग्नेः प्रदीपनं 'सोरा' इति प्रसिद्धं अग्निबाणेषु प्रयुज्यते । तस्य पाकेन स्फटिकाकाराः शलाकाः क्रियन्ते । तन्मूत्रामयिभ्यो हितम् । अत एवोक्तम् ,—'पाण्डुरं सिकताकारं कर्पूराभं शिलाजतु । मूत्रकृच्छ्राश्मरीमेहकामलापाण्डुनाशनम् ॥ एलातोयेन संभिन्नं सिद्धं शुद्धिमुपैति तत् । नैतस्य मारणं सत्त्वपातनं विहितं बुधैः'–इति । उत्पत्तिस्तु मृत्तिकाविशेषाज्जलविशेषाच्च ज्ञेया ॥—

अथ चपलः । चपलस्य शोधनादिकमाह—

**चत्वारश्चपलाः सितासितहरिच्छोणप्रभेदैः पुनः ॥ ४६ ॥**
**मोघौ शोणितशोणकज्जलनिभौ लाक्षावदाशुद्रवा-**
**च्छेषौ तु द्रवतश्चिरेण सुभगौ तौ शुध्यतः सप्तधा ।**
**कर्कोट्यार्द्रकजम्भकस्य सलिले संस्वेदतो वा प्लुतौ**
**प्राथम्याद्रसबन्धनौ तदुपरि स्यातां तु योगानुगौ ॥ ४७ ॥**

टी०—चपलस्तु लोकमध्येऽप्रसिद्धत्वादनेनैव नाम्ना प्रसिद्धः "वङ्गवद्द्रवते वह्नौ चलपस्तेन कीर्तितः"–इति । चपलश्चतुर्धा,–सितासितहरितशोणभेदात् । तत्र द्वयोर्निष्फलत्वमाह—मोघाविति । अन्ययोस्तु फलवत्त्वमाह—शेषाविति । शेषौ हरितश्वेतौ, सुभगौ गुणवत्तरौ । अनयोश्चिरेण द्रवता सुवर्णप्रभत्वं ताराभत्वं च भवति । ताविति कर्कोट्यादिद्रावेण सप्तधा स्वेदितौ शुध्यतः, अथवा भावितौ । प्रथमं तु रसबन्धकौ भवतः; तदुपरि पश्चाद्योगानुगौ योगवाहिनौ स्याताम् । अत एवोक्तम्—"चपलः स्फटिकच्छायः षट्शीर्षो स्निग्धको गुरुः । त्रिदोषघ्नोऽतिवृष्यश्च रसबन्धविधायकः"–इति । अस्य तु रसेषु कैश्चित्पातः कृतः । सत्त्वं तु उपविषविषैर्धान्याम्लकसहितैर्मर्दयित्वा पूर्ववत्पिण्डं कृत्वाऽन्धमूषायां पातयेत् ॥ ४६ ॥ ४७ ॥

अथ माक्षिकः । तस्य शुद्ध्यादिप्रकारमाह—

**तापीजं द्विरुदाहरन्ति विमलामाक्षीकभेदादिह**
**त्रेधाऽऽद्या तु सुवर्णकांस्यरजतच्छायानुकारादमूः ।**
**तिस्रोऽप्यस्रयुताश्चतुस्त्रिफलका वृत्ताः स्वनामश्रियो**
**मध्योक्ता विमला तु शुध्यति दिनं वासाजशृङ्गीरसे ॥४८॥**
**खिन्ना जम्भरसेऽपि तालबलिना वस्वंशकेनाम्भसा**
**जम्भस्यैव परिप्लुता दशपुटैर्जीवेन्न योगानुगा ।**

टी०—तापीजं द्विः द्विविधमुदाहरन्ति—विमला माक्षिकश्च । तत्र विमलस्त्रि-

विधः—हेमपूर्वकः, द्वितीयस्तारपूर्वकः, तृतीयः कांस्यविमलोऽप्यस्ति । तत्तत्कान्त्या लक्ष्यत इत्याह—इह त्रेधेति । विमलशब्दस्त्रिलिङ्गः । माक्षिकाद्भेदकं लक्षणमाह—तिस्रोऽपीति । फलं अस्रं, धारा चिपिटं, वृत्तं वर्तुलं, स्वनामभिरिव इत्यनेन सुवर्णादिप्रभा उक्ता । अत एवोक्तम्,—"तत्तत्कान्त्या स लक्ष्यते । वर्तुलः कोणसंयुक्तः सुस्निग्धः फलकान्वितः । मरुत्पित्तहरो वृष्यो विमलोऽतिरसायनः"—इति । विमलस्तु तपतीतीरे पर्वतभागे दृश्यते, तस्य कांस्यमाक्षिकमिति नाम वदन्ति । तत्र हेमपूर्वो हेमक्रियासु योज्यः, द्वितीयस्तु श्वेतक्रियासु, तृतीयस्तु रसादिषु प्रयोज्यः । तस्य शुद्धिप्रकारमाह—मध्येत्यादि । वासा अटरूषः, अजशृङ्गी मेषशृङ्गी, अनयोः रसे चूर्णीकृत्य, वस्त्रबद्धं कृत्वा, दिनं स्विन्ना तथा निम्बुरसे स्विन्ना शुध्यति । पश्चात्तालकः बलिर्गन्धकः, तेन अष्टमांशेन जम्भाम्भसा त्रिवारं भाविता दशपुटैर्न जीवेत म्रियते । पुटे च प्रत्येकं भावना देया । तद्भस्म योगानुगं भवति । यत्र रसे उक्तं तत्र तत्र प्रयोज्यम् । तथा मेषशृङ्गीटङ्कणक्षाराभ्यां लकुचद्रावैर्मर्दयित्वा विमलं मूषोदरे लिप्त्वा, संशोष्य, निरुध्य पश्चादन्धमूषां कृत्वा, षट्प्रस्थकोकिलैः कोष्ठ्यां ध्माता, शीससंनिभं सत्त्वं मुञ्चति । तद्युक्तो रसः रसायनं भवति । अथवा गोक्षुरक्षारयुक्तं विमलं काङ्क्षीकासीसटङ्कणैरपि वज्रवल्लीकन्दे शिग्रुरम्भातोयैः भावितं पूर्ववन्मूषालेपं कृत्वा, चन्द्रार्कसदृशं सत्त्वं पतति । द्रुतिस्त्वभ्रादिद्रुतिवत्कार्या । एतस्यानुपानं तु—वेल्लव्योषवरान्वितघृतैः सेविता भगन्दरादिसर्वरोगाञ्जयति ॥ ४८ ॥—

अथ माक्षिकम्—

**माक्षीको द्विरिहादिमः कनकरुग्दुर्वर्णवर्णोऽपरः**
**कांस्यश्रीकमुशन्ति केचन परं सर्वेऽपि पूर्वत्विषः ॥ ४९ ॥**
**निष्कोणा गुरवः किरन्ति निभृतं घृष्टाः करे कालिकां**
**स्विन्नास्ते रुबुतैललुङ्गसलिलैर्यामेन शुध्यन्ति च ।**
**पक्का वा घटिकाद्वयेन कदलीकर्कोटिकाकन्दयो-**
**र्दग्धाः कूर्मपुटैस्त्रिभिः पटुतरं लुङ्गाम्बुगन्धप्लुताः ॥ ५० ॥**
**स्युर्भस्मानि जघन्यमध्यसुभगास्ते व्युत्क्रमेणोदिता**
**वृष्याः पाण्डुपटीयसो बलकरा योगोपयोगात्पुनः ।**

**टी०**—माक्षिको द्विविधः—स्वर्णमाक्षिको रजतमाक्षिकश्चेति; दुर्वर्णं रजतं, केचन कांस्यमाक्षिकमुशन्ति, सर्वेषां स्वस्ववर्णत्वात् । लक्षणमाह—निष्कोणा धारारहिताः, गुरवो भारयुक्ताः, करे घृष्टाः कालिकां किरन्ति । शुद्धिमाह—ते इति । ते उरुबूकतैललुङ्गसलिलैः पिष्टाः शुध्यन्ति । अथ पश्चाल्लुङ्गयम्बु मातुलिङ्ग-

रसः गन्धकश्च आभ्यां भाविताः कूर्मपुटैस्त्रिभिर्दग्धा भस्मानि स्युः । ते च व्युत्क्रमेण कांस्यतारसुवर्णसंज्ञका जघन्यमध्योत्तमा उदिताः । वृष्याः शुक्रप्रदाः । पाण्डुपटीयसः पाण्डुघ्नाः । तथा बलकरा योगेषु युक्ताः सन्तः बलकरा भवन्ति । अत्रेदं ज्ञेयम्—कान्यकुब्जदेशोत्थमाक्षिकः सुवर्णवर्णः, तपतीतीरसंभूतस्तु पञ्चवर्णः तारमाक्षिकः पाषाणबहुलः । तस्य शुद्धिमाह—त्रिफलाक्काथे संतप्तो माक्षिकः सप्तवारं शुध्यति । त्रिंशदंशेन नागेन संमिश्रं क्षौद्रघृतैरण्डतैलेन भावितं कर्कोटीक-दलीकन्दयो रसे गोमूत्रेण च भावितं मूषाध्मातं शुल्बसदृशं सत्त्वं मुञ्चति । अत एवोक्तम्—"एरण्डोत्थेन तैलेन गुञ्जाक्षौद्रं च टङ्कणम् । मर्दितं तस्य वापेन सत्त्वं माक्षिकजं द्रवेत्"—इति ॥ ४९ ॥ ५० ॥—

अथ तुत्थादिशोधनमाह—

द्विस्तुत्थं तु मयूरखर्परभिदा तत्राद्यमाहुः शिखि-
ग्रीवाकान्ति तदम्लवर्गलुलितं स्नेहेन सिक्तं पुनः ॥ ५१ ॥
दोलायां परिपक्वमश्वसुरभीमूत्रे दिनं शुध्यति
व्रण्यं कान्तिकरं विषापहरणं चक्षुष्यमेतन्मतम् ।
घस्रं सामि करञ्जतैलनिहितं पादांशसौभाग्यकं
ध्मातं तुत्थरजोऽन्धपात्रपिहितं [1]दीप्तं च काष्ठत्रयैः ॥५२॥
यद्वा मानुषनीलकेशनिहितं सत्त्वं विमुञ्चेत्क्षणा-
त्ताम्रं शोणितबन्धु बन्धुरमथो भूनागसत्त्वं तथा ।
एताभ्यां रविवासरे रचितया संप्लावितं मुद्रया
पीतं वारि विषापहं ग्रहहरं सद्यः प्रसूतिप्रदम् ॥ ५३ ॥
तद्वत्तत्परिमृष्टतप्ततिलजस्नेहोऽमुना मन्त्रितो
मन्त्रेणाशु निहन्ति शूलमतुलं दृग्दोषभूतग्रहान् ।
सद्यः स्त्रीप्रसवप्रदो निगदितः सद्यो व्रणारोपणो
लिप्तो लोचनयोर्हितो विनिहितः प्राग्भालुकिप्रोदितः॥५४॥
'रामवत्सोमसेनानीमुद्रिकेति तथाक्षरम् ।
हिमालयोत्तरे पार्श्वे अश्वकर्णो मरुद्रुमः ॥
तत्र शूलं समुत्पन्नं तत्रैव विलयं गतम् ।'

टी०—तुत्थं द्विविधं—तत्राद्यं मयूरकण्ठच्छायमाहुः नीलवर्णमित्यर्थः । तद-

१ 'दीप्ते च काष्ठोपलैः' इति पाठान्तरम् ।

म्लवर्गेण भावितं, स्नेहेन तैलेन सिक्तं, अश्वसुरभीमूत्रे दिनं दोलायां पक्वं, परिशुध्यतीति । तद्गुणानाह—व्रण्यं व्रणहितं, वान्तिकरं वामकं, स्थावरविषघ्नं नेत्ररोगहरं च । इदं चाञ्जनादौ प्रयोज्यम् । तस्य सत्त्वप्रकारमाह—घस्रमिति । करञ्जतैले सामि घस्रं अर्धदिनं निहितं, पश्चात्पादांशटङ्कणप्लुतं तुत्थं मयूरग्रीवाख्य मन्धमूषायां निहितं, दीप्तैः काष्ठत्रयैर्ध्मातं सत्त्वं मुञ्चति । एवमेव भूनागसत्त्वमाह—भूनागेत्यादि । एवमेव भूनागसत्त्वं निष्कासयेत् । एतच्च मुद्रिकोपयुक्तत्वेनात्रैवोक्तम् । उभाभ्यां मिलिताभ्यां रविवासरे अथवा रविग्रहणे रचितया मुद्रया संस्रावितं यद्वारि तद्विषद्वयं स्थावरजङ्गमं विषं, ग्रहाः स्कन्दादयः, एषां नाशकं, सद्यः स्त्रीप्रसवजनकं च । तद्वदिति—तप्ततिलजः स्नेहः परिमृष्टोऽनया मुद्रया वक्ष्यमाणेन मन्त्रेण मन्त्रितः, अतुलं शूलं निहन्ति, तथा दृग्दोषभूतग्रहं च निहन्ति । तथा सद्यः स्त्रीप्रसवप्रदो भक्षितः सन् , अथ लिप्तः सन् सद्यो व्रणारोपणः, लोचनयोर्निहितो हितो भवति । भालुकिप्रोक्तमन्त्रस्तु—रामवत्सोमसेनानीत्यादि । अत्रेदमवधातव्यं—गरुडेन मरकते पर्वतेऽमृतं पीत्वा पश्चाज्जवात्पीतं विषं वान्तं, तद्घनीभूतं मयूरतुत्थं भवति; तच्च भाराढ्यं मयूरकण्ठच्छायं गुणवत् । दोलायन्त्रेण तच्चूर्णं स्वेदयित्वा, गन्धकलकुचद्रवेण टङ्कणेन च भावयित्वा, अन्धमूषामध्ये कुक्कुटपुटैर्द्वित्रिवारं म्रियते । तथा निम्बुद्रावटङ्कणाभ्यामेकीकृतं ध्मातं ताम्ररूपं सत्त्वं मुञ्चति । तत्सत्त्वं भूनागसत्त्वञ्चानयोर्मुद्रिकां कृत्वा मन्त्रेणानेन मुद्रिकाम्भो निपीतं सप्तवारं मन्त्रितं सद्यः शूलहरं, तथाऽङ्गे लिप्तं शूलहरं, तथा नार्या पीतं प्रसूतिकरं च ज्ञेयम् । खर्परसंज्ञकं रसकः, स हि द्विधा–दर्दुरः कारवेल्लकश्च; सदलो दर्दुरः, निर्दलः कारवेल्लकः, "रसकः सर्वमेहघ्नः कफपित्तविनाशनः । नेत्ररोगक्षयघ्नश्च लोहपारदरञ्जनः॥ नागार्जुनेन संदिष्टौ रसश्च रसकावुभौ । श्रेष्ठौ सिद्धरसौ ख्यातौ देहलोहकरौ परम् ॥ रसश्च रसकश्चोभौ येनाग्निसहनौ कृतौ । देहलोहमयी सिद्धिस्तस्य दासी न संशयः ॥ कटुकालाबुनिर्यासे आलोड्य रसकं पचेत् । शुद्धं दोषविनिर्मुक्तं पीतवर्णं च जायते ॥ नरमूत्रे स्थितो मासं रसको रञ्जयेद्ध्रुवम् । शुद्धं ताम्रं रसं चैव शुद्धं स्वर्णप्रभं यथा"–इति । सत्त्वप्रकारस्तु–"साभयाजतुभूनागनिशाधूमं च टङ्कणम् । अन्धमूषागतं ध्मातं तुत्थं सत्त्वं विमुञ्चति"–इति; यद्वा "लाक्षागुडासुरीपथ्याहरिद्रासर्जटङ्कणैः । सम्यक् संचूर्ण्य संपक्वं गोदुग्धेन च सूरणे ॥ वृन्ताकमूषिकामध्ये निरुध्य गुटिकाकृतिम् । ध्मात्वा ध्मात्वा समाकृष्य ढालयित्वा च शीतले ॥ सत्त्वं वङ्गाकृति ग्राह्यं रसकस्य मनोहरम् । यद्वा जलयुतां स्थालीं निखनेत्कोष्ठिकोदरे । सच्छिद्रं तन्मुखे मल्लं तन्मुखेऽधोमुखं क्षिपेत् ॥ मूषोपरि शिखित्रांश्च प्रक्षिप्य प्रधमेद्दृढम् । पतितं स्थालिकानीरे सत्त्वमादाय योजयेत् ॥ तत्सत्त्वं तालकोपेतं प्रक्षिप्य खलु खर्परे । मर्दयेल्लोहदण्डेन भस्मीभवति निश्चितम्"—इति सत्त्वप्रकारो ज्ञेयः । रसादिषु तु शोधयित्वैव दीयते । भूनागसत्त्वं तु स्वर्णरूप्यताम्रायस्कान्तभूमिषु जातान् भूनागान् तद्विष्ठां वा तदुत्पत्तितत्संश्लिष्टमृत्तिकां वा रजनीतोयैः प्रक्षाल्य, क्षुधितं कुक्कुटं

मयूरं वा क्रमेण चारयित्वा, तद्विष्ठां कुडवमात्रां संगृह्य, क्षाराम्लैः सह पेषयित्वा, विशोष्य, खर्परके दत्त्वा, भर्जनं कुर्यात्। तां मैषीं द्रावणवर्गेणैकीकृत्य, मूषामध्ये निवेश्य, घटिकाद्वयं धमेत्। तस्मिन् शीतीभूते खोटमाहृत्य, प्रक्षाल्य, रवकान् गृहीत्वा, टङ्कणं दत्त्वा, स्वर्णवद्धमेत्। तस्य मयूरतुत्थताम्रस्य च मुद्रिका कार्या। मृत्तिकां तु भृङ्गनिर्गुण्डीद्रावैर्द्रावणवर्गेणैकीकृत्य मर्दयेत्। पश्चाद्दृढमूषायां वटकीकृतां प्रक्षिप्य घटिकाद्वयं धमेत्। तप्तोदकैः प्रक्षाल्य रवकान् भारवत्तरान् रेणून् द्वादशांशेन ताम्रयुक्तान् कृत्वा ध्मात्वा रवकान् कुर्यात्, तेन वज्रादिद्रावणं कुर्यात्। इदं वारद्वयं त्रयं वा वज्रे दत्तं वज्रं द्रुतीभवति। इदं तु वज्रस्य पारदस्य द्रावणार्थे परमं तेजो भवति। गुणास्तु प्रागुक्ताः। स्वर्णेन युक्ताऽपि मुद्रिका कार्या। साऽप्याचिन्त्यसामर्थ्या भवति ॥ ५१–५४ ॥

अथोपरसानाह—

**गन्धस्तालमनःशिले उपरसा, गन्धस्तु तत्र त्रिधा**
**पीतारक्तसितप्रभाभिरधमस्तत्रान्तिमो, मध्यमः ।**
**आद्यो, मध्यभवो वरः सितनिभं केचित्खटीमूचिरे**
**पीतो ह्यामलकच्छविर्लवणको नाम्ना दृषद्गन्धकः ॥ ५५ ॥**
**एवं त्रिस्त्विह पूजितः प्रथमकः,**

टी०—गन्धः गन्धकः। तालो हरितालः। मनःशिला नेपाली। इदमुपलक्षणम्। तदुक्तम्–"गन्धो गैरिककासीसे काङ्क्षी तालशिलाञ्जनम्। कङ्कुष्ठं चेत्युपरसा अष्टौ पारदकर्मणि"—इति। तत्र गन्धकस्य भेदपुरःसरां शुद्धिमाह—गन्धस्त्वित्यादि। पार्वतीरजोयुक्तवस्त्रात्क्षीरसागरे प्रक्षालितादमृतेन सह देवैर्निष्काशितः रसजारणार्थं बन्धनार्थमयं भवत्विति। पारदे तत्रोपरसेषु च ये गुणास्त एवात्र। गन्धस्त्रिधा–पीतरक्तसितभेदात्। तन्मध्येऽन्तिमः श्वेतोऽधमः, आद्यो मध्यमः, रक्तो वरः। केचित्सितं खटीमूचिरे। आमलकच्छविः पीतः, स लवणक उक्तस्तस्यैव नाम दृषद्गन्धकः। लोके द्विविधोऽपि प्रसिद्ध एव आमलकच्छविर्दृषद्गन्धकश्च; रक्तस्तु कुत्रचिद्भवति, सः धातुवादे योज्यः। अन्ये तु चतुर्विधं गन्धकं वदन्ति—रक्तकृष्णौ दुर्लभतरौ, पीतश्वेतौ च सुलभौ। उभावपि पारदमारणे पारदकर्मणि प्रयोज्यौ। प्रथमकः पीतो गन्धकः, इह रसवादे पूजितः। तत्र सर्वस्यापि शुद्धस्यैव प्रयोगः ॥ ५५ ॥—

**सर्वोऽपि शुद्धस्त्वसौ**
**जीर्णोर्णावृतदुग्धभाण्डवदने न्यस्तः सुपिष्टो बलिः ।**

---

१ 'मृदं' इति पा०। २ 'सत्त्वं भवति' इति पा०।

**कूर्माभाऽव्रणखर्परेण सुमृदा संधौ निरुद्धः शनै-**
**रूर्ध्वं प्रज्वलितानलः कुनिहितः प्राग्भाण्डदुग्धे धृतः ॥५६॥**

**टी०**—सर्वोऽपि बलिः जीर्णोर्णावृतदुग्धभाण्डे न्यस्तः, कूर्मपुटे पक्कः, शुद्धः स्यात् । तत्र कूर्मयन्त्रप्रकारमाह—प्रथमतो भाण्डे दुग्धं देयं, पश्चाज्जीर्णोर्णावस्त्रेण अथवा कार्पासवस्त्रेण मुखमावृत्य, तस्योपरि गन्धकचूर्णं दत्त्वा, किंचिद्वस्त्रं श्लथं कृत्वा, तदुपरि कूर्माभमव्रणं खर्परमुत्तानं दत्त्वा, मृत्तिकया संधिलेपं कृत्वा, शनै-रूर्ध्वं प्रज्वलितानलः खर्परमध्ये छगणानि दत्त्वा तदुपरि अग्निं दत्त्वा तत्तापेन द्रुतो भवति, स दुग्धमध्ये निपतितः शीतीभूतो ग्राह्यः ॥ ५६ ॥

प्रकारान्तरमाह—

**प्राग्भाण्डे निहितोऽथवा शुचिरयोदर्व्यां शनैर्द्रावितः,**
**कण्डूकुष्ठविसर्पणप्रदररुग्रक्तातिसाराञ्जयेत् ।**

**टी०**—अयोदर्व्यां घृतं दत्त्वा द्रावितः, प्राग्भाण्डे ऊर्णावस्त्रपिहितवक्त्रे निहितः, शुचिः शुद्धो भवति । तद्गुणानाह–कण्डिवत्यादि । प्रदररुक् स्त्रीरोगः । रक्तातिसारपदेन रक्तपित्तं, रक्तार्शांसि च ग्राह्याणि । अयं त्रिफलाभृङ्गमध्वाज्यैर्भक्षितः शाणमितः गृध्राक्षितुल्याक्षियुगं करोति तथा दीर्घमायुश्च । द्रुतिप्रकारस्तु—षोडशांशव्योष-मिश्रितं गन्धकं वितस्तिमात्रे वस्त्रे प्रकीर्य, वर्तिं कृत्वा, सूत्रेणावेष्ट्य, तिलतैले निमज्य, संदंशेन मध्ये धृत्वा, उभयत्र प्रज्वालयेत्, ततो निःसृततैलबिन्दून् काच-भाजने संगृह्य, तस्मात्त्रीन् बिन्दून्नागवल्लीदले दत्त्वा, स्वच्छं पारदं वल्लमात्रं दत्त्वाऽ-ङ्गुल्या मर्दयित्वा, सपत्रां द्रुतिं भक्षयेत् । तदग्निदीप्तिकरं श्वासकासादिरोगघ्नं च । केचित्पलाशतैलमिश्रितां तां शुद्धपारदं च नागवल्लीदलेन भक्षयन्ति, पौष्टिकत्वात् । अथवाऽर्कस्नुहीक्षीरैर्वस्त्रं विलिप्य शोषयेत्, ततो नवनीतपिष्टगन्धकं रसेन सहैव लेपयेत्, वर्तिं कृत्वा द्रुतिं निष्कासयेत् । यद्वाऽर्कभृङ्गनिर्गुण्डीकनकतुलसीविजया-तर्कारीरसैरन्यैर्वा रसैर्वस्त्रं विलिप्य, शोषयित्वा, तत्र नवनीतपिष्टगन्धकपारदकज्जलीं लेपयित्वा, पश्चात्पूर्ववद्द्रुतिं कारयेत् । तस्या बिन्दुत्रयं, शुद्धस्य पारदस्य वल्लं, मर्द-यित्वा भक्षयेत् । इयं राजविडीति लोके वातव्याधौ । "गन्धकस्तुल्यमरिचः षड्गु-णत्रिफलान्वितः । शम्याकस्य तु मूलेन मर्दितोऽखिलरोगहा"—इति । तन्मूलस्य रसेन घृष्टः सर्वशरीरे लेपितश्च खर्जूकुष्ठघ्नः । द्विनिष्कप्रमितो गन्धकस्तैलेन सह पीतः, पश्चादपामार्गतोयेन तैलमरिचेन सह पेषयित्वा सकलदेहं विलिप्य, घर्मे तिष्ठेत्, ततो मध्याह्ने तक्रभक्तं भुञ्जीत, रात्रौ वह्निसेवा, प्रातर्महिषीच्छगणलेपः, शीतजलेन स्नानं च कार्यं; एवं पामाकुष्ठं गच्छति ॥—

हरितालस्य शुद्ध्यादिप्रकारमाह—

**पत्री पिण्ड इति द्विधा निगदितस्तालः, स कूष्माण्डक-**
**क्षारे भस्मपलाशमूलसलिले वा शाल्मलीवारिणि ॥ ५७ ॥**
**खिन्नः षड्गुणिते द्वियाममथवा यामं शुचिर्योजितो**
**योगेष्वेव गुणप्रदस्त्वपरथा प्राणापहः प्राणिनाम् ।**

**टी०**—तालस्तालकः, पत्री पिण्ड इति द्विधा निगदितः गोदन्ती पत्रीतालश्च । सः कूष्माण्डकक्षारजले पलाशमूलक्वाथे शाल्मलीस्वरसे वा पिष्टिं कृत्वा दोलायन्त्रे खिन्नः द्वियामं शुद्धो भवति । क्वाथश्च षड्गुणः । अथवा यामं दिवसे पचेत् । सः योगेषु योजितः शुचिरेव शुद्ध एव गुणप्रदो भवति । अपरथा अन्यथा अशुद्धः केवलश्च प्राणिनां पञ्चजनानां प्राणापहः । अत्र स्वर्णवर्णः भारवान् स्निग्धस्तनुपत्रो भासुरश्च पत्रतालः; निष्पत्रोऽल्पभारवान् अल्पसत्त्वः पिण्डतालकः । उभयमपि रजोहरणं भवति, कुष्ठहारी च । शुद्धिस्तु चूर्णसंयुक्ते जले । सर्वत्र कूष्माण्डादिरसे चूर्णो देयः । ब्रह्ममूलक्वाथेन त्रिवारं भाव्यस्तथा महिषीमूत्रेण; पश्चान्मूषायां दत्त्वा, दशभिरुपलैः पुटं दद्यात् । एवं द्वादशधा भावना पुटानि च दत्त्वा शुद्धं योगेषु योजयेत् । कुलित्थक्वाथटङ्कणमहिषीघृतमधुयुक्तं दधिदुग्धाज्यभावितं हण्डिकायां क्षिप्त्वोपरि मल्लं सच्छिद्रं दत्त्वा, सन्धिलेपं कृत्वा, क्रमेण वह्निं यामचतुष्टयं दद्यात् यावन्नीलपीतो धूमो गच्छति, ततः पाण्डुधूमे सत्येकप्रहरमात्रं मल्लच्छिद्रं गोमयेनाच्छाद्य तीव्रवह्निं दद्यात्; यामान्ते चोद्घाट्य पाण्डुरे धूमेऽदृष्टे सत्यग्निं पूर्णं कुर्यात् । पश्चाच्छीतां स्थालीमुत्तार्य सत्त्वं गृह्णीयात् । अथवा बालच्छागनालमर्दितं तालं द्रावणवर्गेण मर्दयित्वा, काचकूप्यां विनिक्षिप्य, मृत्कर्पटैर्विलिप्य, वालुकायन्त्रे स्थापयित्वा, द्वादशप्रहरमग्निं दद्यात्, ऊर्ध्वं कण्ठस्थितं सत्त्वं गृह्णीयात् ॥ ५७ ॥—

अथ मनःशिलाशोधनमाह—

**श्यामाङ्गी कणवीरिकेति च शिला द्विस्तत्र मुख्याऽन्तिमा**
**भृङ्गागस्तिजयन्तिकार्द्रकरसस्विन्ना शुचिः पूर्ववत् ॥ ५८ ॥**

**टी०**—शिला द्विविधा–श्यामाङ्गी कणवीरा च । तत्र मुख्या कणवीरिका । भृङ्गागस्तिजयन्तिकार्द्रकरसस्विन्ना सती पूर्ववत् शुद्धा रोगघ्नी; अशुद्धा आयुर्घ्नी । अत्र केचन त्रिविधामाहुः–पूर्वे द्वे खण्डाख्या च । किंचिद्रक्ता किंचिद्गौरा भाराढ्या श्यामा, हिङ्गुलवद्रक्ता किंचित्पीता तेजस्विनी कणवीरिका, चूर्णरूपा भारवत्तरा रक्तवर्णा खण्डपूर्वा; उत्तरोत्तरं गुणभूयिष्ठा । अशुद्धा अश्मरीमूत्रकृच्छ्रादीनां कर्त्री । तां चूर्णीकृत्य पूर्वरसेषु दोलायन्त्रेण स्वेदयेत् । अष्टमांशेन गुडगुग्गुलुलोहकिट्टेन सर्पिषा मर्दयित्वा, मूषायां दत्त्वा, अन्धयित्वा, कोष्ठ्यां ध्माता सत्त्वं मुञ्चेत् । भूनागविष्ठाधौतङ्कणसिक्थकैर्मर्दयित्वा, कारवल्लीदलाम्भसा संपिष्य, मूषायां दत्त्वा,

अथवा क्षाराम्लपिष्टां शिलां मूषायां दत्त्वा, ध्माता सत्त्वं मुञ्चेत् । गन्धाश्मगैरिक-कासीसेत्याद्युक्तत्वाद्गैरिकादि निरूप्यते । गैरिकं द्विविधं—सुवर्णगैरिकं पाषाणगैरिकं च; हिध्मावमिविषनेत्ररोगादिघ्नं, तस्य सत्त्वरूपत्वान्न सत्त्वपातनम् । कासीसं द्विविधं–वालुकाकासीसं पुष्पकासीसं च; पूर्वं गुणवत्; भृङ्गराजरसेन शुद्धं भवति; आमं श्वित्रादिरोगघ्नं, शुद्धं नेत्ररोगघ्नं; त्रिफलाघृतक्षौद्राभ्यां सेवितं शाणमितं रसायनं भवति । अथ तुवरी—सा द्विधा–फुल्लतुवरी तुवरी च; काञ्जिके स्विन्ना शुद्धिं प्राप्नोति; क्षाराम्लैर्मर्दिता ध्माता सती सत्त्वं मुञ्चति; गोपित्तेन शतवारं भाविता ध्माता सत्त्वं मुञ्चति, तच्च क्रामणं भवति । अथाञ्जनानि—तदुक्तम्–"सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतः परम् । स्रोतोऽञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च । नीलाञ्जनं च तेषां हि स्वरूपमिह वर्ण्यते"—इति । आद्यं धूम्रवर्णं, द्वितीयं पीताभं, तृतीयमीषत्कृष्णं भङ्गे भासुरं च, चतुर्थं श्वेतं स्निग्धं च, पञ्चमं नीलवर्णं स्निग्धं गुरु च । एतानि तत्तन्नदीषु तत्तत्पर्वतेषु जायन्ते। रसाञ्जनं तु–"दार्वीक्वाथमजाक्षीरपादं पक्वं यदा घनम्। तदा रसाञ्जनं ख्यातं नेत्रयोस्तत्प्रयोजयेत्"—इति। केचित्खर्परदार्वीक्वाथोद्भवं तुत्थं रसाञ्जनं, वल्मीकमृत्तिकाकारं घृष्टं गैरिकवत् भङ्गे नीलं स्रोतोऽञ्जनमिति केचित्, रीतिविट् पुष्पाञ्जनमित्यन्ये । सर्वाणि नेत्र्याणि, विषघ्नानि, हिध्माघ्नानि च ज्ञेयानि । सर्वेषां शुद्धिस्तु भृङ्गराजरसैः, मनःशिलावत्सत्त्वं कार्यम् । स्रोतोञ्जनस्य गोमूत्रादौ शोधितस्य घृतक्षौद्रवसाभिर्भावितस्य रजसा मर्दिते भाविते पारदोऽर्घो भवति, अग्निसहश्च । राजावर्तवत्सत्त्वं ग्राह्यम् । हिमाचलप्रदेशे कङ्कुष्ठं भवति; तद्द्विविधं–नालिकाख्यं रेणुकं चेति; पीतप्रभं पूर्वं, द्वितीयं श्यामपीतमिति; केचित्सद्योजातस्य हस्तिनो वर्च इति; अपरे सद्योजातस्य तेजिवाहस्य नालं, तदपि तद्वर्णं भवतीति वदन्ति । कङ्कुष्ठं शुण्ठ्यम्बुभावितं शुद्धं भवति । सत्त्वरूपं विरेचकं च । "बब्बूलकोलिकाक्वाथजीरसौभाग्यटङ्कणम् । कङ्कुष्ठविषनाशाय भूयो भूयः पिबेन्नरः—" इति कङ्कुष्ठम् । अथ साधारणरसाः—कम्पिल्लकः सौराष्ट्रदेशोत्पन्न इष्टिकाचूर्णवत्, किंचित्सवह्निकः, विरेचनः कृमिहारी च; 'कमेला' इति लोके । अथ गौरीपाषाणः—पीतः सोमलः, शङ्खश्वेतस्फटिकाभो, दाडिमाभश्च । अन्त्यौ द्वौ कृत्रिमौ, पूर्वोऽचलोत्पन्नः । अथ नवसादरः—इष्टिकादहने पाण्डुरलवणं सूकरविष्ठामनुष्यविष्ठान्तः संभवति, स चुल्लिकालवणाभिधः 'नवसागर' इति ज्ञेयः; रसेन्द्रजारणद्रावणमुखकरणशङ्खद्रावादावुपयुज्यते । बिडाख्यलवणमपि तथाविधं भवति । अथ वराटिका–पीतवर्णा ग्रन्थिला पृष्ठे उन्नता सार्धनिष्कभारा श्रेष्ठा, तदन्या न्यूना, चराचरसंज्ञिका ज्ञेया; शोधनं तक्रे काञ्जिके निम्बुरसे च; रसेन्द्रजारणे उपयुज्यते बिडेषु, परिणामादिशूलघ्नी च । वराटिकाः श्वेतपीतभासोऽल्पाः, तदन्ये तु वराटास्ते च गुरवो हीनाश्च । अथाग्निजारः—समुद्रतीरेऽग्निनक्रस्य जरायुः शुष्क अग्निजारः; स बिडादौ जारणे चोपयुज्यते, तस्य शुद्धिर्नास्तीति ज्ञेयम्।पर्वते पाषाणजोऽल्पीयो

हिङ्गुलतुल्यो भवति तद्गिरिसिन्दूरं, रसबन्धादौ हितं धातुवादे नेत्ररोगघ्नं च । अथ हिङ्गुलः–हिङ्गुलो द्विविधः–शुकतुण्डो हंसपादश्च । तत्र प्रथमोऽल्पगुणः, तस्य नाम 'चर्मार' इति; द्वितीयस्तु श्वेतरेखः प्रवालतुल्यः सर्वदोषघ्नो दीपनादिगुणश्च; एतस्मान्निष्कासितो रसः षड्गुणजीर्णगन्धकतुल्यगुणः । आर्द्रकलकुचद्रावाभ्यां भावितः शोषितश्च शुद्धो भवति । पातनायन्त्रेण पातितश्च सूतसंकाशं सत्त्वं मुञ्चति । अयं मेषीक्षीरेण भावितोऽम्लवर्गैश्च बहुशो भावितो हीनवर्णस्वर्णलेपितः कुङ्कुमप्रभस्वर्णं सूर्यपाकेन करोति । अथ मृद्दारश्शृङ्गम्–तच्च द्विविधं–सदलं निर्दलं च; अत्र सदलं पीतवर्णं, निर्दलं कर्बुरं, अर्बुदगिरेः पार्श्वे गुर्जरमण्डले वर्तते । ततः सीसरूपं सत्त्वं भवति, पुरुषरोगघ्नं केशरञ्जनं रसबन्धकं च । किंचामी "साधारणरसाः सर्वे मातुलुङ्गार्द्रकाम्बुना । त्रिवारं भाविताः शुष्का भवेयुर्दोषवर्जिताः ॥ यानि कानि च सत्त्वानि तानि शुध्यन्त्यशेषतः । ध्मातानि शुद्धिवर्गेण मिलन्ति च परस्परम्"–इति । "राजावर्तोऽप्युपरसः सरक्तो नीलिमाश्रितः"–इति । गुरुः श्रेष्ठोऽन्यश्च हीनः; गन्धकमातुलुङ्गाम्लरसेनार्द्रकरसेन च शुध्यति, पुटितो म्रियते च; अथ सत्त्वं–मनःशिलाघृतेन मिश्रीकृत्यायसे पात्रे पाचयित्वा पश्चान्महिषीक्षीरेण सौभाग्यपञ्चकेन चैकीकृत्य पिण्डं कृत्वा खदिराङ्गारैर्ध्मातं सत्त्वं मुञ्चति । अनेनैव क्रमेण गैरिकस्यापि निष्कासनीयम् । अत एवोक्तम्,—"सूर्यावर्तककदलीवन्ध्याः कोशातकी च सुरदाली । शिग्रुश्च वज्रकन्दो नीरकणा काकमाची च ॥ आसामेकरसेन लवणक्षाराम्लभाविताः क्रमशः । शुध्यन्ति रसोरसा ध्मात्वा मुञ्चन्ति सत्त्वानि"–इति । रसरत्नाकरे तु सत्त्वप्रकारः—"मुस्ताक्काथेन सप्ताहं कुर्याद्धान्याभ्रकं श्रुतम् । शिग्रुसूरणरम्भानां कन्दस्यैकस्य वा द्रवैः॥ पिप्पलीमूलजम्बीरद्रवैर्वाऽथ परिप्लुतम्। इत्थंप्लुतस्याभ्रकस्य पादांशं टङ्कणं क्षिपेत् ॥ दिनैकं मर्दयेत्खल्वे युक्तमम्लेन केनचित्"—इत्यभ्रकशोधनम्। "गुञ्जोर्णागुग्गुलुर्लाक्षाराजीसर्जरसं गुडम् । क्षुद्रमीनयवक्षारकाचपिण्याकसूरणम् ॥ भूलतात्रिफलावह्निक्षीरकन्दं पुनर्नवाम्। धत्तूरलाङ्गलीपाठारकगन्धकसिक्थकम् ॥ गोक्षुरं पञ्चलवणं सर्पं च द्विमुखं मधु । षड्बिन्दुक्षुद्रशम्बूकमस्थीनि शशकस्य च ॥ पारावतमलं त्र्यूषमिन्द्रगोपं सशिग्रुकम् । गोधूमं सर्षपं तुल्यं छागीदुग्धेन मर्दयेत् ॥ एतद्व्यस्तं समस्तं वा याममात्रेण पिण्डितम् । अस्य पिण्डस्य भागैकं द्विभागं शोधिताभ्रकम् । पञ्चमाहिषभागैकं सर्वमेकत्र कारयेत् ॥ कर्षांशा वटिकाः कार्याः किंचिच्छायाविशोषिताः । खदिराङ्गारसंयुक्ते कोष्ठीयन्त्रे क्षिपन् क्षिपन् ॥ वटिकाः पञ्च पञ्चैव वङ्कनालेन संधमेत् । समासौ किट्टमादाय स्फोटयेत्स्वाङ्गशीतलम् ॥ वर्तुलं सत्त्वमादाय शेषं किट्टं विचूर्णयेत् । चूर्णादर्धं पूर्वपिण्डं तद्वन्माहिषपञ्चकम् ॥ एकीकृत्य धमेत्सर्वं तद्वत्सत्त्वं समाहरेत् । इत्येवं च पुनः कुर्यात्त्रिधा सत्त्वं विमुञ्चति ॥ अनेन क्रमयोगेन [1]कान्तसस्यकमा-

---

१—'वैक्रान्तं च समाक्षिकम्' इति पा० ।

क्षिकाः । कठिनोपरसाश्चान्ये शुद्धा भूनागमृत्तिका ॥ मुञ्चन्ति सत्त्वसंघातं ग्राह्येत्तत्पृथक्पृथक् । अभ्रसत्त्वं समावर्त्य समांशं काचटङ्कणम् ॥ दत्त्वा दत्त्वा त्रिवारं तद्वज्रमूषागतं धमेत् । अम्लवर्गः स्नुहीपत्रं चिञ्चाबीजं सवल्कलम् ॥ कल्कयेत्तत्र तत्सत्त्वं सप्तवारं निषेचयेत् । चन्द्रशुभ्रं[1] भवेत्तद्धि हितं सूतस्य जारणे ॥ धान्याभ्रं दशभागं स्याच्छुद्धं नागं त्रिभागिकम् । टङ्कणं माक्षिकं सूतं भागैकं च सुशोधितम् ॥ ऊर्णास्वर्जियवक्षारं भागं भागं विमिश्रयेत् ॥ मर्द्य मूत्राम्लवर्गाभ्यां यथाप्राप्तं दिनावधि । अजापञ्चाङ्गसंयुक्तं पूर्ववत्सत्त्वपातनम् ॥ कृत्वाऽऽवापमृदुं[2] साक्षाद्योजयेन्निर्मलं बुधः । अश्वगोमहिषीणां च खुरशृङ्गं समाहरेत् ॥ तच्चूर्णावापमात्रेण अत्यन्तं मृदुतां व्रजेत्"—इत्यभ्रकसत्त्वम् । "पञ्चमूत्राम्लवर्गैश्च द्विसप्ताहं विभावयेत् । माक्षिकं तीव्रघर्मेण दिनमम्लैश्च मर्दयेत् ॥ मित्रपञ्चकसंयुक्तं वटीं कृत्वा धमेद्दृढम् । व्योमवद्वङ्कनालेन सत्त्वं शुल्बनिभं द्रवेत् ॥ विमलानां च शुद्धानां शस्यकस्याप्ययं विधिः"—इति माक्षिकादिसत्त्वम् । "गोमांसैर्मातुलुङ्गाम्लैर्दिनं भाव्या मनःशिला । तां रक्तपीतपुष्पाणां रसैः पित्तैश्च भावयेत् ॥ दिनान्ते मर्दयेद्यामं मित्रपञ्चकसंयुताम् । गुलिकां काचकुप्यन्तः क्षिप्त्वा तां काचकूपिकाम् ॥ सर्वतोऽङ्गुलमानेन वस्त्रमृत्तिकया दिह्येत् । शुष्कां तां वालुकायन्त्रे शनैर्मृद्वग्निना पचेत् ॥ शुष्के द्रावे निरुध्याथ सम्यङ्मृल्लवणैर्मुखम् । चण्डाग्निना पचेत्तावद्यावद्द्वादशयामकम् ॥ स्वाङ्गशीतं समुद्धृत्य भित्त्वा कूपीं समाहरेत् । ऊर्ध्वलग्नं शिलासत्त्वं बालार्ककिरणोपमम्"—इति शिलासत्त्वम् । "भागाः षोडश तालस्य त्रिंशत्पारदटङ्कणात् । श्वेताभ्रवङ्गयोश्चूर्णं प्रतिभागं विमिश्रयेत् ॥ सर्वं स्नुगर्कपयसा मर्दयेद्दिवसद्वयम् । शिलावद्ग्राहयेत्सत्त्वं तालकात्स्फटिकोपमम् ॥ तालकस्याष्टमांशेन देयं सूतं च टङ्कणम् । कूष्माण्डस्य रसैः स्नुह्याः क्षीरैर्मर्द्यं दिनद्वयम् ॥ तद्गोलं छिद्रमूषायां ग्राह्यं सत्त्वं च पूर्ववत्-" इति तालकसत्त्वम् । "तुत्थस्य टङ्कणं पादं मर्दयेन्मधुसर्पिषा । तुल्येन मिश्रितं ध्मातं कोष्ठीयन्त्रे दृढाग्निना ॥ ध्मापितं द्रवते सत्त्वं कीरतुण्डसमप्रभम्-" इति तुत्थसत्त्वम् । "सौवीरं तीक्ष्णचूर्णं च मूषायामन्धयेत्समम् । हठाद्ध्माते भवेत्सत्त्वं वरनागं तदुच्यते-" इति वरनागम् । "क्षाराम्लस्नेहपित्तैश्च क्रमाद्भाव्यं दिनं दिनम् ॥ पुष्पाणां रक्तपीतानां रसैर्भाव्यं दिनद्वयम् ॥ रसकं चूर्णयेत्पश्चादूर्णालाक्षाभयानिशाः । टङ्कणं गृहधूमं च भूनागं सप्तमं भवेत् ॥ एभिः समं तु तच्चूर्णमजाक्षीरेण मर्दयेत् । याममेतेन कल्केन लेप्या वार्ताकमूषिका ॥ शुष्का कोष्ठ्यां दृढाङ्गारैर्ध्माता सत्त्वं विमुञ्चति-" इति रसकसत्त्वम् । "वैक्रान्तानां पलैकं च कर्षैकं टङ्कणस्य च । रविक्षीरैर्दिनं भाव्यं मर्द्यं शिग्रुद्रवैर्दिनम् ॥ गुञ्जापिण्याकवह्नीनां प्रतिकर्षं नियोजयेत् । एतेन गुटिकां कृत्वा कोष्ठीयन्त्रे धमेद्दृढम् ॥ शङ्खकुन्देन्दुसंकाशं सत्त्वं वैक्रान्तजं भवेत्-" इति वैक्रान्तसत्त्वम् । "सिताऽसितां च सौराष्ट्रीं गोपित्तैर्भावयेत्तु ताम् । शत-

१ 'मृदु शुभ्रं' इति पा० । २ 'ऽऽदाय मृदुं' इति पा० ।

वारं प्रयत्नेन मित्रपञ्चकसंयुताम् ॥ ध्मानाद्विमुञ्चते सत्त्वं क्रामकं कोष्ठयन्त्रके-" इति सौराष्ट्रीसत्त्वम् । "सस्यकं चूर्णितं भाव्यं दिनं शशकशोणितैः । स्त्रीमूत्रैर्वा याममेकं तत्पादांशां निशां क्षिपेत् ॥ मर्द्यं करञ्जतैलेन यामैकं गोलकं च तम् । अन्धमूषागतं ध्मातं घटिकार्धं दृढाग्निना ॥ इन्द्रगोपकसंकाशं सत्त्वं मुञ्चति शोभनम्-" इति सस्यकसत्त्वम् । एतत्स्पष्टत्वान्न व्याख्यातम् । मित्रपञ्चकं तु-"गुडगुग्गुलुगुञ्जाज्यसारघैष्टङ्कणान्वितैः । द्रुर्द्रावाखिललोहादेर्द्रावणाय गणो मतः"—इति । द्रुतिप्रकारस्तु असंबद्धोऽपि लिख्यते पूर्वाचार्यैरुक्तत्वात्—"अम्लवर्गेऽभ्रपत्राणि क्षिपेद्धर्मे दिनत्रयम् । तथाऽन्यान्यभ्रपत्राणि भावयेत्क्षीरकन्दजैः । क्षारैर्यावद्भवेत्कल्कस्तं कल्कं पूर्वपत्रकैः ॥ लिप्त्वा लिप्त्वा क्षिपेद्धर्मे कांस्यपात्रे विशोषयेत् । सप्ताहान्नात्र संदेहो रसरूपा द्रुतिर्भवेत्"—इति । अन्यच्च—"कपितिन्दुबालफलैः समं धान्याभ्रकं दृढम् । मर्दयेद्दिनमेकं तु काचकूप्यां निवेशयेत् ॥ नरकेशैर्मुखं रुद्ध्वा कूपिकां लेपयेन्मृदा । पुटे पातालयन्त्रेण दिनान्ते द्रुतिमाप्नुयात्-" इति । स्पष्टम् । "केतकीस्वरसं ग्राह्यं सैन्धवं स्वर्णयूथिका । इन्द्रगोपकसंयुक्तं सर्वं भाण्डे विनिक्षिपेत् ॥ सप्ताहं स्वेदयेत्तस्मिन् वैक्रान्तं द्रवतां व्रजेत् । लोहाष्टके तथा वज्रे वापनात्स्वेदनाद्द्रुतिः ॥ जायते नात्र संदेहो योगस्यास्य प्रभावतः । कुरुते योगराजोऽयं रत्नानां द्रुतयः शुभाः ॥ कुसुम्भतैलमध्ये तु संस्थाप्या द्रुतयः पृथक् । तिष्ठन्ति चिरकालं तु प्राप्ते कार्ये नियोजयेत्"-इत्यादयो बहवः प्रकारा ग्रन्थान्तरतोऽनुसरणीयाः ॥ ५८ ॥

अनुवासनान्तान्संस्कारान्प्रतिपाद्य वेधोपयुक्तान् संस्कारानाह[१]—तत्र प्रथमं जारणोच्यते । जारणा द्विविधा—समुखा, निर्मुखा च; तत्र मुखकरणार्थं गन्धकजारणा प्रथमत उच्यते । (अथ जारणाभेदलक्षणमुच्यते) समुखत्वं दीपनादिसंस्कारेण बीजभक्षणसामर्थ्यं, निर्मुखत्वमसंजातमुखत्वम् । जारणालक्षणं तु प्राक् प्रतिपादितम् । निर्मुखे गन्धकजारणया मुखं संपाद्य बीजादिजारणसंस्काराः कार्या इत्याह—

**कूप्यां भावितगन्धकं पलमितं शुद्धं रसं षट्पलं**
**कर्पूरं लघु कोलसंमितमिदं दत्त्वा मुखे मुद्रणम् ।**
**लिप्त्वा मृद्वसनैर्दिनं घनतरैर्दीप्ताग्निना पाचितं**
**जीर्णे गन्धकचन्द्रके मुखमथोद्घाट्यं क्षणं पूर्ववत् ॥ ५९ ॥**

---

१ "इदानीं पारदस्य उर्वरितान् संस्कारानभिधत्ते । तदुक्तम्-"कर्माष्टदशकेनैव क्रमाद्वेधः प्रकाशितः । मुखं च मुखबन्धश्च रसबन्धश्च ईरितः । गोपितं शम्भुना सिद्धैः सूचितं न-प्रकाशितम्" इति बिकानेरपुस्तके पाठान्तरम् ।

दत्त्वा सर्वमिदं पुनर्मृदु पचेदेवं शतं जारये-
द्गन्धं चेष्टिकयन्त्रके लघुपुटैः सिद्धं रसं तं पुनः ॥

टी०—सप्तमृत्कर्पटैः समुद्रां कूपिकां कृत्वा, वालुकायन्त्रे संस्थाप्य, प्रहरचतुष्टयमग्निं दद्यात् । पुनः पुनर्गन्धकं कर्पूरं च दत्त्वा पाकं कुर्यात् । तच्चेत्कूपिकायन्त्रं दृढं न स्यात्तदा नवीनं संपादयेत् । यदि रससिन्दूरः स्यात्तदोर्ध्वपातनेन हिङ्गुलवन्निष्कासयेदित्येके । भावनादिप्रकारस्तु—"गन्धकं सूक्ष्मचूर्णं तु सप्तधा बृहतीद्रवैः । भावयेच्चाथ वृन्ताकरसेनैव तु सप्तधा ॥ पलैकं पारदं शुद्धं काचकूप्यन्तरे क्षिपेत् । कर्षैकं भावितं गन्धं कर्पूरं माषमात्रकम् ॥ क्षिप्त्वा तत्र मुखं रुद्ध्वा मृदा कूपीं च लेपयेत् । दीप्ताग्निना दिनं पाच्या मुखमुद्घाटयेत्पुनः ॥ जीर्णे गन्धककर्पूरं दत्त्वा तद्वत्पुनः पुनः । एवं शतगुणं जीर्णं गन्धकं जारयेद्रसे"—इति । स्पष्टमेतत् । प्रकारान्तरेण जारणमाह—इष्टिकेत्यादि । इष्टिकायन्त्रं गौरीयन्त्रम् । अत एवोक्तम्,—"विधाय वर्तुलां गर्तां मल्लमत्र निधाय च । विनिधायेष्टिकां तत्र मध्ये गर्तवतीं शुभाम् ॥ गर्तस्य परितः कुर्यात्पालिकामङ्गुलोच्छ्रिताम् । गर्ते सूतं विनिक्षिप्य गर्तास्ये वसनं क्षिपेत् ॥ निक्षिपेद्गन्धकं तत्र मल्लेनास्यं निरुध्य च । मल्लपालिकयोर्मध्ये मृदा सम्यङ्निरुध्य च ॥ वनोत्पलैः पुटं देयं कपोताख्यं न चाधिकम् । इष्टिकायन्त्रमेतत्स्याद्गन्धकं तेन जारयेत्"—इति । लघुपुटं तु "यत्पुटं दीयते भूमावष्टसंख्यावनोत्पलैः । बद्ध्वा (द्ध) सूतकभस्मार्थं कपोतपुटमुच्यते"—इति । तदुक्तं रसरत्नाकरे,—"कासीसं चैव सौराष्ट्री स्वर्जिक्षाराजमोदकम् । शिग्रुतोयेन संयुक्तं कृत्वा भाव्यमनेन वै ॥ सप्ताहं चूर्णितं गन्धं भावयेत्तत्पुनः पुनः । इष्टिकागर्तमध्ये तु सम्यक् शुद्धं रसं क्षिपेत् ॥ मुखं स्वच्छेन वस्त्रेण छादयेत्तस्य पृष्ठतः । दशांशं गन्धकं दत्त्वा शरावेणावरोधयेत् ॥ पृष्ठे लघुपुटं देयं जीर्णे गन्धं पुनः क्षिपेत् । एवं शतगुणं जीर्णं गन्धकं कारयेच्छनैः"—इति । स्पष्टमेतत् ॥ ५९ ॥—

चारणाप्रकारमाह—

तप्ते तीक्ष्णसमुद्भवे सुविमले खल्वेऽथ सूतं क्षिपे-
त्पादांशं कनकं विमर्द्य शनकैर्दत्त्वाऽम्लजम्बीरकम् ॥ ६० ॥
पात्रे[1] जम्भलवारिणा सुविपुले[2] काचोद्भवे पूरिते
स्थाप्यं सूर्यखरातपे पटुतरं वस्त्रं ततो मर्दितम् ॥
तस्मिन्नेव पुनर्ददीत विमलं संचारणात्साम्यता

टी०—तप्तखल्वलक्षणं पक्वबीजलक्षणं च वक्ष्यते; अम्लं निम्बुफलं क्षुद्रं पनसं

१ 'यन्त्रे' पा० । २ 'च सुनले' पा० ।

वा । मर्दनानन्तरं जम्बीररससंयुक्ते काचचषकपात्रे उष्णमध्ये स्थापयेत् । एवं दिनत्रयं कुर्यात् । तेन चारणा भवति । बीजं तु चतुःषष्ट्यंशक्रमेण पादपर्यन्तं चार्यम् । तदुक्तम्,—"तं रसं तप्तखल्वे तु क्षिपेद्वस्त्रेण गालितम् । पादांशं पक्व-बीजं च दत्त्वाऽम्लैर्मर्दयेद्दिनम् ॥ निक्षिप्य चारणायन्त्रे जम्बीररससंयुते । तत्पात्रं धारयेद्धर्मे चारितो जायते रसः"—इति ॥ ६० ॥

चारणानन्तरं जारणमाह—

**पश्चात्कच्छपयन्त्रके सबिडकं घस्रं पचेत्पूर्ववत् ॥ ६१ ॥**
**जार्यं सार्यमनेकशः पुनरिदं बीजं सुपक्वं रसे**

पश्चादित्यादि । सबिडकमिति बिडं तु—"त्रिक्षारं पञ्चलवणं नवसारं कटु-त्रयम् । इन्द्रगोपं घनं शिग्रुं सूरणं वनसूरणम् ॥ भावयेदम्लवर्गेण त्रिदिनं ह्यातपे खरे । अनेन मर्दितः सूतो भक्षयत्यष्टलोहकम्"—इति । यद्वा,—"दग्धं शङ्खं रविक्षीरैर्भावितं शतधाऽऽतपे । ततः पञ्चपुटैः पक्वं जारणे बिडमुत्तमम्"—इति । यद्वा—"टङ्कणं शतधा भाव्यं द्रवैः पालाशमूलजैः । बिडो वह्निमुखो नाम हितोऽयं वह्निजारणे"—इति । लौकिकास्तु–त्रिक्षारगन्धकलवणसौरक्षारकर्पूरका-ङ्क्षीकासीसश्वेतशिलाजतुगौरीपाषाणनवसारविड्लवणानामथवा पञ्चलवणकाङ्क्षीमनःशि-लामयूरतुत्थाम्लवर्गस्नुह्यर्कदुग्धमूत्रवर्गाणां कूपिकायन्त्रेण द्रवं निष्कास्य तेन सह मर्दयन्ति; अथवा एतैरेव सह यथासंभवं मर्दयन्ति । एवमन्यान्यपि बिडानि ज्ञेयानि । कच्छपयन्त्रं तु—"जलपूर्णपात्रमध्ये दत्त्वा घटखर्परं सुविस्तीर्णम् । तदुपरि बिडमध्यगतः स्थाप्यः सूतः कृतः कोष्ठ्याम् ॥ लघुकटोरिकया कृतप-टमृत्संधिलेपयाऽऽच्छाद्य । पूर्णं तद्घटखर्परमङ्गारैः खदिरकोकिलभवैः ॥ स्वेदनतो मर्दनतः कच्छपयन्त्रस्थितो रसो जरति । अग्निबलेनैव ततो गर्भे द्रवन्ति सर्वस-त्त्वानि"—इति । पुटं चात्रेदमेव देयम् । तदुक्तं रसरत्नाकरे,—"सबिडं कच्छपे यन्त्रे दिनैकं तं पुटे पचेत् । जारितः स्यात्पुनर्बीजं दत्त्वा चार्यं च पूर्ववत् ॥ जारयेच्च पुनस्तद्वदेवं कुर्यात्समं क्रमात्"—इति । एवं जारितो भवति । ततः पुनस्तप्तखल्वे वस्त्रगालितं रसं निक्षिप्य मर्दनं कुर्यात् । तप्तखल्वस्तु,—"अजाशकृत्तुषाग्निं च खनयित्वा भुवि क्षिपेत् । तस्योपरि स्थितः खल्वस्त-प्तखल्वोऽभिधीयते"—इति । खल्वश्चात्र लौहः । मर्दनानन्तरं घर्मे सजम्बीररसं स्थापयित्वा पुनः कच्छपयन्त्रे जारणं कुर्यात् । एवं जारणात्रयं चारणागर्भद्रुतिरूपं संस्कारद्वयं च प्रतिपादितम् । जारणलक्षणं बिडलक्षणं च प्रागुक्तम् । सबिडे कच्छपे यन्त्रे समुखसूतस्य बीजजारणमनेन क्रमेण कार्यम् । सुवर्णनागयोरावर्तनं कृत्वा, माषमात्रं तप्तखल्वे वर्षयित्वा, पश्चात्पलमात्रं शुद्धं पारदं दत्त्वा, मर्दयित्वा, सिद्धमूलीरसं दत्त्वा, काञ्जिकैर्वा मर्दयित्वा, खरघर्ममध्ये तप्तखल्वे चतुःषष्ट्यंशतो

ग्रासं दत्त्वा, चारणायन्त्रे घर्मे दिनैकं मर्दयित्वा, त्रिक्षारादिस्नुहीदुग्धमूत्रैर्मेलयित्वा, वस्त्रे लेपं कृत्वा, तन्मध्ये रसं दत्त्वा, भूर्जपत्रेणावेष्ट्य, सिद्धमूल्यम्लसंयुक्ते दोलायन्त्रे पचेत्, उष्णेन काञ्जिकेन प्रक्षालनं, पश्चादुष्णे लोहपात्रे वस्त्रपूतं निक्षिपेत्, ततो हस्तेन यावच्छुष्कं तावन्मर्दयेत्, निर्मलीकरणार्थं पुनर्गालनं, एवंकृते यदा वस्त्रमध्ये न गलति तदा तप्तलोहखल्वे मर्दयेत्, पुनः स्वेदनं दोलायन्त्रे; एवं जीर्णं कुर्यादिति चारणजारणाक्रमः । इष्टिकाचूर्णगुडदग्धोर्णागृहधूमराजिकासैन्धवं सर्वं रसषोडशांशं दत्त्वा, निम्बूरसेन मर्दयित्वा, अम्लवर्गयुते दोलायन्त्रे पचेत्, जीर्णे जीर्णे पुनः पुनः कुर्यात्; एवं रागग्राही भवति । ततो द्वात्रिंशदंशं ग्रासं दद्यात् । पुनश्चारणं जारणं मर्दनं स्वेदनं च कृत्वा, तृतीयो ग्रासः षोडशांशेन भागेन; तत्रापि पूर्ववत्कृत्वाऽष्टमांशभागो देयः । चारणादि पूर्ववत् । एवं ग्रासचतुष्टयं दत्त्वा कच्छपयन्त्रेण जारणां कुर्यादिति । बिडमूर्ध्वाधोऽष्टमांशेन प्रक्षिप्य ततोऽर्धांशो ग्रासः, तत्रापि पूर्ववत् । ततः समः, तत्रापि पूर्ववत् । एवं समं समं दत्त्वा पूर्ववज्जारणादि षड्गुणपर्यन्तं कार्यम् । रागग्रहणं तु पूर्ववत्कार्यम् । एवं द्वन्द्वयोगेन सत्त्वस्वर्णादिलोहबीजानां जारणं कर्तव्यम् । मात्रायुक्तिरपि पूर्ववत्कार्या । ततः पक्वबीजेन सिद्धबीजेन वा सारणात्रयं कुर्यात् । पुनः कच्छपयन्त्रेण तप्तखल्वे मर्दनेन जारयेत् । ततो मुखबन्धनं शोधनं रसबन्धनं क्रामणं च पूर्ववत् कुर्यात् । तारस्याष्टानवतिभागाः स्वर्णस्यैको भागो वेधकस्यैको भाग इति प्रकारस्तु सर्वत्र ज्ञेयः । चन्द्रार्कयोर्मिलितयोर्वेधो रसरत्नाकरे—"ताप्येन मारयेच्छुल्बं तथा गन्धेन मारितम् । तत्ताम्रं वाहयेन्नागे मूषामध्ये धमन् धमन् ॥ शनैः शतगुणं यावत्ताप्यचूर्णं क्षिपन्क्षिपन् । तं नागं वाहयेत्स्वर्णे द्वात्रिंशद्गुणितं क्रमात् । स्वर्णशेषं तु तद्बीजं समांशं जारयेद्रसे । अनेनैव तु बीजेन सारयेज्जारयेत्पुनः ॥ पूर्ववत्क्रमयोगेन बन्धनान्तं च कारयेत् । क्रामणेन समायुक्तं सहस्रांशेन योजयेत् ॥ चन्द्रार्कं जायते स्वर्णं देवाभरणमुत्तमम्"—इति । पक्वबीजं तु,—"स्वर्णं ताम्रं समं शुद्धं द्रावितं लेपयेत्पुनः । साम्लेन ताप्यकल्केन धमेत्स्वर्णावशोषितम् ॥ एवं दशगुणं वाह्यं ताम्रं वा तुत्थसत्त्वकम् । पक्वबीजमिति ख्यातं स्वर्णशेषं समाहरेत्"—इति । एवं पक्वबीजान्यन्याप्यनेकविधानि कार्याणीत्यादि ग्रन्थान्तरतो ज्ञेयम् । तदुक्तं रसरत्नाकरे,—"स्वर्णं नागं समावर्त्य माषमात्रं तु घर्षयेत् । तप्तखल्वे ततस्तस्मिन् पलमेकं रसं क्षिपेत् ॥ सिद्धमूलीद्रवं दत्त्वा मर्दयेत्काञ्जिकैर्दिनम् । घर्मे वा तप्तखल्वे वा ततो ग्रासं तु दापयेत् ॥ चतुःषष्ट्यंशकं पूर्वं द्वन्द्वसत्त्वं सुभावितम् । दत्त्वा घर्मे दिनैकं च चारणायन्त्रके क्षिपेत् ॥ सजम्बीरे दिनं घर्मे धारितश्चरति ध्रुवम् । त्रिक्षारं पञ्चलवणमम्लवर्गः स्नुहीपयः ॥ गोमूत्रैर्गालयेत्सर्वं तेन वस्त्रं घनं दिहेत् । तन्मध्ये धारितं सूतं बद्ध्वा भूर्जेन वेष्टयेत् । सिद्धमूल्यम्लसंयुक्ते

१ 'स्थापयित्वा' पा०

दोलायन्त्रे त्र्यहं पचेत् । उद्धृत्योष्णारनालेन क्षालयेल्लोहपात्रके ॥ वस्त्रपूतं ततः कृत्वा सोष्णे पात्रे विमर्दयेत् । हस्तेनैव भवेच्छुष्कं यावत्तं पारदं पुनः ॥ चतुर्गुणेन वस्त्रेण गालयेन्निर्मलो भवेत् । अजीर्णं चेत्पुनर्मर्द्यमम्लं दत्त्वा दिनावधि ॥ दोलायां स्वेदयेत्तद्वद्भवेज्जीर्णं न संशयः । इष्टिका गुडदुग्धोर्णागृहधूमं च राजिका ॥ सैन्धवेन युतं सर्वं षोडशांशं रसस्य तु । दत्त्वा ततोऽम्लवर्गेण दोलायन्त्रे दिनं पचेत् ॥ जीर्णे जीर्णे त्विदं कुर्याद्रागग्राही न संशयः । द्वात्रिंशांशं ततो ग्रासं दत्त्वा चार्यं च जारयेत् ॥ पूर्ववत्स्वेदनान्तं च कृत्वा ग्रासं तृतीयकम् । षोडशांशं प्रदातव्यं तज्जीर्णे चाष्टमांशकम् ॥ जारयेत्पूर्वयोगेन एवं ग्रासचतुष्टयम् । ततः कच्छपयन्त्रेण जारयेत्तन्निगद्यते ॥ ऊर्ध्वाधश्चाष्टमांशेन ग्रासे ग्रासे बिडं क्षिपेत् । चतुर्थांशं ततो द्व्यंशं ग्रासो देयः पुनः समः ॥ जीर्णे समं समं देयमेवं जार्यं तु षड्गुणम् । रागाणां ग्रहणार्थं च दत्त्वा ग्रासे तु पूर्ववत् ॥ इत्येवं द्वन्द्वयोगानां सत्त्वानां च विशेषतः । स्वर्णादिसर्वलोहानां बीजानां जारणं हितम् ॥ कर्तव्यं वक्ष्यतेऽप्यत्र मात्रा युक्तिश्च पूर्ववत् । अभावे व्योमसत्त्वस्य कान्तपाषाणसत्त्वकम् ॥ तीक्ष्णपाषाणसत्त्वं च द्वन्द्वितं व्योमसत्त्वकम् । जारयेत्पूर्वयोगेन सर्वेषां स्यात्फलं समम् । इत्येवं षड्गुणं द्वन्द्वं यत्किंचिज्जारयेद्रसे । जारितं सिद्धबीजेन सारणं तन्निगद्यते ॥ ताप्यसत्त्वं व्योमसत्त्वं ताम्रं हेम समं समम् । आवर्त्य द्वन्द्वलिप्तायां मूषायामान्धितं पुनः ॥ समुद्धृत्य पुनर्धान्यमूषायां प्रकटं तु तत् । माक्षिकं धौतसत्त्वं च स्तोकं स्तोकं विनिक्षिपेत् ॥ स्वर्णशेषं भवेद्यावत्ताभ्यां द्वन्द्वं तु तत्पुनः । पूर्ववच्च धमेत्तावद्यावत्स्वर्णावशेषितम् ॥ सिद्धबीजमिदं ख्यातं दाडिमीपुष्पवद्भवेत् । अनेन सिद्धबीजेन पूर्ववत्सारणात्रयम् । कृत्वाऽथ जारयेत्तद्वज्जीर्णे बद्ध्वा मुखं तथा । बन्धनं शोधनं चैव क्रामणं चैव पूर्ववत् ॥ चन्द्रार्के द्राविते योज्यं सहस्रांशेन काञ्चनम् । जायते दिव्यरूपाढ्यं सत्यं भैरवभाषितम्"—इति ॥ ६१ ॥—

सारणमाह—

**तस्मात्सार्यमसंशयं सुविमलं यन्त्रे वसाद्यन्विते ॥**
**मूषां तालसमन्वितां दृढतरां कृत्वाऽथ तस्यां दृढं**
**पक्वं बीजमथो न्यसेद्रसवरे तैलाक्तयन्त्रस्थिते ॥ ६२ ॥**

टी०—तस्मादिति । नालमूषायां द्रावितं पक्वं बीजं रसान्विते सारणायन्त्रे क्षिपेत् ढालयेच्च, एवं सारितो रसो भवति । तच्च यन्त्रं सुवर्णकारस्य तैलयुक्तं सुवर्णलगुडीकरणार्थं यत्तद्वत्स्थूलं कार्यं; तत्र च नालमूषया स्वर्णद्रुतिर्देया, तेन एकीभूतं भवति । तैलं तु—"ज्योतिष्मतीकरञ्जाख्यं कटुतुम्बीसमुद्भवम् । तैलमेकं समादाय मण्डूकवसया समम् ॥ कूर्मसूकरमेषाहिजलौकामत्स्यजाऽपि च—" इति । एतेष्वेका वसा ग्राह्या । "रक्तवर्गः पीतवर्गः क्वाथ्यः क्षीरैश्चतुर्गुणैः । पुष्पाणां

रक्तपीतानामनेकेषां द्रवं हरेत् ॥ एतद्द्रावं द्विभागं स्यात्पूर्वकाथचतुष्टयम् । पातयेत्काकतुण्ड्युत्थं महाराष्ट्रीद्रवं तथा ॥ प्रत्येकं भागमेकैकं पूर्वतैलं वसायुतम् । योज्यं भागद्वयं तत्र भूलतासमलतालकम् ॥ द्वन्द्वमेलापयोगैकं तैलात्षोडशकांशकम् । प्रत्येकं योजयेत्तस्मिन् सर्वमेकत्र पातयेत् ॥ ग्राह्यं तैलावशेषं तद्वस्त्रपूतं सुरक्षयेत् । विख्यातं सारणातैलं रसराजस्य सारणे-" इति । उत्तमभाण्डमध्ये रसं दत्त्वा, तैलं निक्षिप्य, एकीकृत्य, तन्मध्ये द्रुतं पक्वबीजं देयम् ।

एकीभूतमिदं सुसारितमतः खल्वे विमर्द्य रसै-
र्जम्बीरप्रभवैर्बिडैः समतुलैः कूर्माभिधे जारयेत् ।
जीर्णे बीजरसौ विमर्द्य सलिलैर्जम्बीरलुङ्गोत्थितै-
र्घर्मे धार्यमतस्तु सार्यममलं बीजं त्रिपादं पुनः ॥ ६३ ॥
सार्यं जार्यमनेन पूर्वविधिना सिद्धं सुधीभिः पुनर्-

टी०—सारणानन्तरमन्यत्क्रममाह—एकीभूतमित्यादि । बिडं कच्छपयन्त्रं तु प्रागुक्तम् । पश्चान्मर्दनं तप्तखल्वे कृत्वा, वस्त्रपूतं च कृत्वा, तस्मिन्नेव सारणायन्त्रे द्विगुणेन पक्वबीजेन पूर्ववदेकीकृत्य, पुनः सबिडे कच्छपयन्त्रे जारणं कृत्वा, पुनः वस्त्रपूतं च कृत्वा, तप्तखल्वे मर्दयित्वा, वस्त्रपूतं सारणायन्त्रे प्रक्षिप्य, द्रुतं त्रिगुणबीजं प्रक्षिप्य, पूर्ववज्जारणं कुर्यात् । एवं सारणायन्त्रे सर्वत्र ज्ञेयम् ॥ ६३ ॥—

धत्तूरोद्भवतैलसंयुतमिदं शुद्धं तु तालं समम् ।
द्रावैर्दिव्यगणस्य लोहघटिते तप्तेऽथ खल्वे दिनं
मर्द्यं चान्धितवज्रमूषविधृतं दद्यात्करीषैः पुटम् ॥ ६४ ॥
एवं त्रिःपरिपाचितं रसवरं बद्ध्वा मुखं तद्भवे-
च्छुल्वं माक्षिकधौतकं शशिरजस्तीक्ष्णं रसेन्द्रं समम् ।
सर्वं जालिनिकारसैर्दृढतरं मर्द्यं दिनं तत्पुनः
क्षौद्राज्यैस्त्रिदिनं विमर्दितमिदं गोलीकृतं शोषितम् ॥६५॥
वज्रकौश्चिगतं पिधानवसनैराच्छादितं सप्तधा
शोष्यं खादिरकोकिलैः खरतरं तीव्राग्निना संधमेत् ।
खोटं टङ्कणकाचचूर्णमणुशो दत्त्वा पुनः संधमे-
द्वारांस्त्रींस्तरुणार्ककान्तिरमलो बद्धो रसेन्द्रो भवेत् ॥ ६६ ॥

मुखबन्धाख्यं संस्कारान्तरमाह—धत्तूरेत्यादि । दिव्यौषधयश्च वज्रमूषा च प्रागुक्ता । अन्धितमाच्छादितं मृत्तिकया, करीषाग्निस्तु भूधरपुटमेव, अथवा

मृदुपुटं गौर्वरपुटं वा । पाकस्तु दिनपर्यन्तम् । दिव्यौषधिद्रावैः पुनर्मर्दयित्वा मुखबन्धो भवति । पाचनं मर्दनं च वारसप्तकं ज्ञेयम् । तस्यैव खोटककरणमाह—तद्भवेदित्यादि । माक्षिकसत्त्वं धौतमाक्षिकमित्युच्यते; अथवा माक्षिकं मर्दयित्वा जलं दत्त्वा यत्सुवर्णवर्णं प्रान्ते उर्वरितं भवति तज्ज्ञेयं; अथवा भूनागसत्त्वं धौतशब्देनोच्यते । एतेषां श्लक्ष्णचूर्णं समांशं पीतदेवदाल्या रसेन मर्दयित्वा, पश्चात्तन्मध्ये पूर्वं पारदं दत्त्वा, दिनावधि मर्दयेत् । सूक्ष्मचूर्णं त्रिदिवसं मधुसर्पिर्भ्यां मर्दयित्वा गोलकीकृतं वज्रमूषागतं सप्तमृत्कर्पटै रुद्ध्वा, संशोष्य, पश्चात्खदिराङ्गारान् दत्त्वा, कोष्ठ्यां तीव्राग्निना धमेत्, स खोटबद्धो भवति । तदुक्तम्—"सारितं सारणायन्त्रे क्षिपेत्तैलवसान्विते । द्रावितं नालमूषायां पक्वबीजं रसान्वितम् ॥ तद्यन्त्रे ढालयेदेव सारितो जायते रसः । सारितं तु पुनर्मर्द्य पूर्ववद्विडसंयुतम् ॥ जारयेत्कच्छपे यन्त्रे जीर्णे बीजं तु सारयेत् । पूर्ववत्सारणायन्त्रे बीजेन द्विगुणेन च ॥ पुनस्तज्जारयेत्तद्वत्तथैव प्रतिसारयेत् । त्रिगुणेन च बीजेन पूर्ववज्जारयेत्पुनः"—इति सारणात्रयम् । "तद्रसं तालकं तुल्यं तैलं धत्तूरसंभवम् ॥ दिव्यौषधिगणद्रावैः सर्वं मर्द्यं दिनावधि । वज्रमूषान्धितं पश्चात्कारीषेणाग्निना पचेत् ॥ इत्येवं च पुनः कुर्यात्ततो बद्धमुखो भवेत्"—इति मुखबन्धनम् । "तद्रसं धौतमाक्षीकं तीक्ष्णशुल्बरजः शशी । समांशं देवदाल्युत्थद्रवैर्मर्द्य दिनावधि ॥ त्रिदिनं मधुसर्पिर्भ्यां मर्दितं गोलकीकृतम् । वज्रमूषागतं रुद्ध्वा शोष्यं तीव्राग्निना धमेत् ॥ खदिराङ्गारयोगेन खोटबद्धो भवेद्रसः"—इति । तस्य शोधनमाह—खोटमिति । काचोऽत्र श्वेतो नीलो वा । अन्यच्च स्पष्टम् । रसबन्धनानन्तरं स्थापनं वदन्ति ॥ ६४–६६ ॥

**तं सिक्थेन सुवेष्टितं कनकजे सामुद्रके स्थापितं**
**तारं क्रामणसंयुतं शतमितं स्वर्णं भवेद्रल्लतः ॥ ६७ ॥**
**अष्टानवतिभागं स्याद्रौप्यमेकं च हाटकम् ।**
**एको भागो वेधकः स्यादित्येवं वेधनक्रमः ॥ ६८ ॥**

वेधनमाह—तमित्यादि । तं रसम् । सिक्थकं मधूच्छिष्टं 'मेण' इति; तस्य पूजनं सर्वदा कार्यम् । तस्य वेधप्रकारमाह—शतमितमिति । क्रामणयोगश्च—"सौराष्ट्रीं भावयेद्धर्मे गवां पित्तैस्त्रिधा पुनः । तत्सत्त्वं व्योमवद्ग्राह्यं क्रामकं योजयेद्रसे ॥ इन्द्रगोपं विषं कान्चं नररक्तं स्नुहीपयः । रसकं दरदं तैलं सर्वमेकत्र मर्दयेत् ॥ क्रामकं क्षेपलेपाभ्यां वेधकाले प्रयोजयेत्"—इति दशविधं क्रामकम् । वेधश्चात्र क्षेपसंज्ञकः । वेधयोजनप्रकारमाह—अष्टानवतीति । सुवर्णकरणे रौप्यमष्टानवतिभागमेको भागः सुवर्णस्य वेधकद्रव्यस्य एको भागः, एवं रौप्यादौ । तदुक्तम्,—"तं खोटं टङ्कणैः काचैर्वेधयेद्वै धमन् धमन् । तेजःपुञ्जो रसो बद्धो बालार्कसदृशो भवेत्"

इति रसबन्धनम् । "तं रसं सिक्थकेनैव वेष्टयित्वाऽथ पूजयेत् । शतांशेन द्रुते तारे क्रामणेनैव संयुतम् ॥ तत्तारं जायते स्वर्णं जाम्बूनदसमप्रभम् । अष्टानवतिभागं स्याद्रौप्यमेकं च हाटकम् ॥ एको भागो वेधकः स्यात्"–इति गन्धकजारणाक्रमेण वेधः । रञ्जनप्रकारस्तु,—"खर्परस्थे द्रुते नागे ब्रह्मबीजदलानि तु । क्षिप्त्वाऽग्निं ज्वालयेच्चण्डं ब्रह्मदण्डेन चालयेत् ॥ चतुर्यामात्तु तद्भस्म जातं पात्रात्समुद्धरेत् । तद्भस्म गन्धकं तुल्यं याममम्लेन पेषयेत् ॥ रुद्ध्वा गजपुटे पश्चात्पादांशं गन्धकं पुनः । दत्त्वाऽम्लैर्मर्दितं पश्चादेवं वारांश्चतुर्दश ॥ रक्तवर्णं भवेद्भस्म तद्भागं खर्परं क्षिपेत् । भागत्रयं शिलाचूर्णं पृथक्पात्रे विनिक्षिपेत् । पञ्चाङ्गं वासकाचूर्णं त्वक्चूर्णं चार्जुनस्य च ॥ शाककिंशुककोरण्टशिग्रूणां पुष्पमाहरेत् । नागिनी नागकन्या च कुमारी चाहिमारकः ॥ सर्वेषां प्रतिभागैकं शिलामध्ये विनिक्षिपेत् । तेभ्यश्चतुर्गुणैर्मूत्रैश्छागजैः क्वाथमाहरेत् ॥ पूर्वोक्तं भस्म नागस्य खर्परस्य च संक्षिपेत् । चालयन्पाचयेच्चुल्ल्यां यावत्सप्तदिनावधि ॥ अनेन मृतनागेन वापो देयो द्रुतस्य च । पक्वबीजस्य भागांस्त्रीन् रञ्जितं जायते शुभम्"—इति । रञ्जनं, सर्वत्र पक्वबीजे कार्यम् । "त्रिक्षारं पञ्चलवणं काङ्क्षी कासीसगन्धकम् । माक्षिकं काञ्जिकैर्युक्तं ताम्रपात्रे दिनत्रयम् ॥ स्थितं गर्भेषु तस्मिँस्तु द्रुतं नागं विनिक्षिपेत् । तारकर्मणि वङ्गं वा शतवारं निषेचयेत् ॥ तद्द्रवं ताम्रपात्रस्थमभिषेकं विदुर्बुधाः ॥ अनेन चारणावस्तु शतवारं विभावयेत् । द्वन्द्वितं व्योमसत्त्वं च बीजानि विविधानि च ॥ द्वन्द्वितं वज्रबीजं च भावितं चारयेद्रसे"–इत्यभिषेकः सर्वत्र कार्यः ॥ ६७ ॥ ६८ ॥

प्रकारान्तरमाह—

**शुद्धं संस्कृतिभिस्तथा सुविमलं गन्धं रसं भावितं**
**पात्रे[1] लोहतुलामये विनिहितं धूमं पिबत्यल्पशः ।**
**एवं षोडशभागगन्धजनितं धूमं हि चार्यं मुहुः**
**पश्चाद्गन्धकवासितो रसवरो नाम्ना तु कामाभिधः ॥ ६९ ॥**
**व्योमादिप्रभवं तु सत्त्वममलं साध्यं ततश्चारये-**
**त्सार्यं जार्यमनेकशो मुखभवं[2] बन्धं च संक्रामणम् ।**
**चन्द्रार्के निहितं सहस्रशतशो वेधेन जाम्बूनदं**
**कुर्याद्दानविधौ नियोज्य सकलं भोगे च राजोचिते ॥७०॥**
**यद्वा निष्कशतं शतांशविमले गन्धं रसं कन्यका-**
**द्रावैर्मर्द्यमथोर्ध्वपातविधिना चोर्ध्वं नयेत्पारदम् ।**

१ "यन्त्रे" पा० । २ 'मुखवधं' पा० ।

तं संगृह्य पुनर्नयेत्सुविमले यन्त्रेऽथ भूसंज्ञके
पाकं कुम्भिपुटैस्त्रिसप्तदिवसं गौर्याख्ययन्त्रे क्षिपेत् ॥ ७१ ॥
एकं[1]द्वित्रिचतुःक्रमेण शतशो जार्यं तु लक्षावधि
चार्यं जार्यमनेकबीजघ[2]टितं स्वर्णं शतादिक्रमैः ।
बद्धाऽऽस्यं रसखोटशोधनमथो बन्धं च वेधं क्रमा-
त्तारे क्रामणसंयुतं शतगुणे युञ्ज्याद्र[3]सं पूर्ववत् ॥ ७२ ॥
पूर्वैर्भावितगन्धकं रसवरे जार्यं तु षड्भागतो
यन्त्रेणाथ तुलाभिधेन च ततः कोशातकी लाङ्गली ।
खल्वे तद्द्रवतो दिनावधि पुनः पादांशकं बीजकं
चार्यं जार्यमनेकशो बिडयुतं कूर्माभिधे तं रसम् ॥ ७३ ॥
त्रिबीजेन सुसारितं त्वथ मुखं बद्ध्वा तु खोटं चरे-
च्छोध्यं टङ्कणकाचतोऽर्कसदृशो बद्धो भवेत्पारदः ।
तं संक्रामणयोगतः शतगुणे तारे तु वेधः क्रमा-
देवं गन्धकयोगतो बहुविधं कुर्यात्सुधीः काञ्चनम् ॥ ७४ ॥

टी०—शुद्धमित्यादि । वासनामुखितो भवेदित्यन्तेन जारणा चोक्ता । तत्र च व्योमसत्त्वादिजारणं मुखबन्धान्तं च सर्वं कुर्यात् । द्वन्द्वसत्त्वमावर्त्य, तद्रजो मूषायामवचूर्ण्य, अभिषेकेण शतवारं भावयित्वा, चतुःषष्ट्यंशादियोगेन चारयेत् । अनेन कामरूपो बन्ध उक्तः । यद्वा निष्कशतमिति । ऊर्ध्वपातनविधिना पारदं निष्कास्य, भूधरयन्त्रे पाकं कृत्वा, गौरीयन्त्रे पुनः पाकं कुर्यात् । एवं यथाशक्ति गन्धकजारणं कुर्यात् । तस्य फलं क्रमेणाह—शतगुणे योज्यमित्यादि । पूर्ववदेव भावितो गन्धकः कार्यः । तोलकस्य षट्तोलकं योज्यः । "तुलायन्त्रं तुलाकारं मूषायन्त्रं तदुच्यते । लोहमूषाद्वयं कृत्वा द्वादशाङ्गुलमानतः ॥ ईषच्छिद्रान्वितामेकां तत्र गन्धकसंयुताम् । मूषायां रसयुक्तायामन्यस्यां तां प्रवेशयेत् ॥ तोयं स्यात्सूतकस्याधो गन्धाधो वह्निदीपनम्"—इति तुलायन्त्रम् । कोशातकी 'कडू दोडकी' इति लोके, लाङ्गली कळलावी, अनयोर्द्रवः । पक्वबीजं बिडं च प्रागुक्तम् । चारणं जारणं च पूर्ववज्ज्ञेयम् । अन्यत्स्पष्टम् । इति गन्धकजारणक्रमेण सर्वोऽर्थः प्रतिपादितः । तदुक्तं रसरत्नाकरे—"पूर्वबद्धस्य सूतस्य पूर्वं संस्कृतगन्धकम् ।

---

१ 'एवं' पा० । २ 'पुटितं' पा० । ३ 'रसे' इति पा० ।

जारयेत् षड्गुणं गन्धं तुलायन्त्रेण पूर्ववत् ॥ तिक्तकोशातकीद्रावं लाङ्गलीद्रावसंयुतम् । दापयेत्पूर्ववत्सूतं खल्वे मर्द्यं दिनावधि ॥ पादांशं पक्वबीजं च चारयित्वाऽथ जारयेत् । मुखं बद्ध्वा रसं बद्ध्वा क्रामणेन समन्वितम् ॥ तारे वेधं शतांशेन दापयेत्काञ्चनं भवेत् । तस्याष्टानवतिर्भागाः स्वर्णस्यापि च भागकम् ॥ भागैकं वेधकस्येति सर्वत्र विहितः क्रमः । अथ शुद्धस्य सूतस्य जारयेत्पूर्वभावितम् । गन्धकं तु तुलायन्त्रे पश्चात्सर्वं पलं पलम् । मूषा नालान्विता ऊर्ध्ववक्त्रा स्याद्द्वादशाङ्गुला ॥ दृढा लोहमयी कार्या त्वनया सदृशी परा । एकस्यां निक्षिपेत्सूतमन्यस्यां गन्धकं समम् ॥ एकस्या मुखमध्ये तु ह्यपरस्या मुखं क्षिपेत् । लिप्त्वा मृल्लवणैः सार्धं गन्धकोर्ध्वं पुटं लघु ॥ रसस्याधो जलं स्थाप्यं धूमं गन्धं पिबत्यलम् । जीर्णे गन्धे समुद्धाट्य तुल्यगन्धं च दापयेत् ॥ इत्येवं षोडशगुणं गन्धं जार्यं पुनः पुनः । जायते सूतराजोऽयं वासनामुखितो भवेत्"—इति मुखकरणम् । "व्योमसत्त्वं ताप्यसत्त्वं शुल्बं शुद्धं समं समम् । आवर्त्य द्वन्द्वलिप्तायां मूषायामथ चूर्णयेत् ॥ भावयेदभिषेकेण पूर्ववच्छतवारकम् । पूर्ववच्चारयेदेतद्वासनामुखिते रसे ॥ तावज्जार्यं प्रयत्नेन यावद्द्रवति षड्गुणम् । तत्सूते सारितं जार्यं सिद्धबीजं तु पूर्ववत् ॥ मुखबन्धं बन्धनं च कृत्वा वेधं प्रदापयेत् । क्रामणेन समायुक्तं चन्द्रार्कं काञ्चनं भवेत् ॥ सहस्रांशेन तत्सत्यं रसोऽयं कामरूपकः—"इति । अथवा—"शतनिष्कं शुद्धसूतं दशनिष्कं तु गन्धकम् । श्लक्ष्णं कन्याद्रवैर्मर्द्यं पाचनायन्त्रके पचेत् ॥ ऊर्ध्वलग्नं समादाय गन्धकं शतनिष्ककम् । दत्त्वा मर्द्यं पुनस्तद्वद्यन्त्रे पाच्यं तु भूधरे । एवं पुनः पुनः कुर्यादेकविंशतिवारकम् । गौरीयन्त्रे तु ततं सूतं क्षिप्त्वा देयं तु गन्धकम् ॥ भावितं पूर्वयोगेन विंशत्यंशेन चूर्णितम् । रुद्ध्वा लघुपुटे पाच्यं जीर्णे गन्धं प्रदापयेत् ॥ एवं पुनः पुनर्जार्यं यथाशक्ति क्रमेण वै । जीर्णे शतगुणे गन्धे शतवेधी भवेद्रसः ॥ सहस्रगुणिते जीर्णे सहस्रांशेन वेधयेत् । सारयेत्पक्वबीजेन पूर्ववज्जारयेत्क्रमात् ॥ मुखं बद्ध्वा रसं बद्ध्वा ततो वेधं प्रदापयेत् । जायते कनकं दिव्यं देवाभरणमुत्तमम्"—इति ॥ ६९–७४ ॥

हिङ्गुलोत्थितसूतस्य संस्कारेण क्रमवेधमाह—

**हिङ्गूलोत्थमथो रसेन्द्रममलं संस्वेदितं सप्तधा**
**भूनागैः सह मर्दितं दृढतरं खल्वे तु तप्ते ततः ।**
**पात्यं चोर्ध्वविलग्नमाहृतरसं पादांशतो द्वन्द्वितं**
**व्योम्नः सत्त्वमतस्तु माक्षिकभवं पादांशतो जारयेत् ॥७५॥**

---

१ 'दश'० पा० ।

सर्वेषां खलु सत्त्वकं मृदुतरं तप्तं दिनैकं पुन-
र्गर्भद्रावकसंयुतं विमृ[1]दितं जातद्रवं पूर्ववत् ।
मूषायां सुविपाचितं पुनरिदं सत्त्वे[2] सुजीर्णे पुन-
र्देयं पाच्यमनेकशो द्रुततरं द्रावं सुपक्कं वसु ॥ ७६ ॥
मात्रापाकबिडप्रयोगमखिलं पूर्वक्रमेणैव त-
च्चार्यं जार्यमनेकशः पुनरिदं सार्यं च जार्यं क्रमात् ।
एवं क्रामणशोधनं च बहुशः कृत्वाऽथ तारे लवं
दत्त्वा स्वर्णचयं सहस्रगुणितं कुर्याद्यथेष्टं भिषक् ॥ ७७ ॥
यद्वा भूफणिसत्त्वतैलममलं भूनागचूर्णैर्युतं
मूषां वज्र[3]मृदा विधाय तदधो निक्षिप्य सूतस्य हि ।
दत्त्वा चोर्ध्वमधो निरुध्य सकलां काचेन टङ्केन वा
पाच्या भूधरयन्त्रगा तुषकरीषाग्नौ तु घस्रं पुनः ॥ ७८ ॥
एवं मासयुगं क्रमेण रचितो बद्धश्च रक्षःसमो
वह्नौ तिष्ठति लोहसत्त्वममलं भुङ्क्ते दवाग्निर्यथा ।
कुर्यात्पूर्ववदेव जारणविधिं बन्धं च संक्रामणं
वेधं पूर्ववदेव कोटिगुणितं चन्द्रार्कयोः काञ्चनम् ॥ ७९ ॥

**टी०**—द्वन्द्वप्रकारास्तु प्रागुक्ताः । महारसादिसत्त्वप्रकाराः पूर्वं निरूपिताः । अन्यत्स्पष्टम् । गर्भद्रावकयोगस्तु वक्ष्यते । भूनागसत्त्वतैलप्रकारस्तु रसरत्नाकरोक्तो वक्ष्यते । मूषायां रसस्योर्ध्वाधः चूर्णं दत्त्वा काचेन मुखमुद्रां कृत्वा भूधरे पचेत् । अन्यत्पूर्ववदेव कार्यमित्याह—कुर्यादिति ॥ ७५–७९ ॥

एवं गन्धकयोगतोऽपि सुमुखं कृत्वा तथा[4] वाऽभ्रकं
गौरीयन्त्रविधानतोऽपि सुमुखं पश्चात्तु धान्याभ्रकम् ।
सत्त्वं बीजमनेकयन्त्रविधिना सोमानले वा पुन-
श्चक्रे नाभिसमुद्भवे त्वनुदिनं कुर्वीत यत्नं[5] पुनः ॥ ८० ॥

पुनर्गन्धकयोगेन मुखकरणमाह—एवमिति । गन्धकप्रयोगेण समुखत्वं कार्यम् । तथा गौरीयन्त्रविधानतो धान्याभ्रकं चारयित्वा सुमुखः कार्यः । पश्चाद्धान्याभ्रकादि-

---

१ 'तु विमृतं' इति पा० । २ जीर्णे' इति पा० । ३ 'वज्रमुखां' इति पा० । ४ 'यथा' चाभ्रकं' इति पा० । ५ 'यन्त्रं' इति पा० ।

चारणजारणादि सर्वं ज्ञेयम् । अथवा सोमनालेनाभ्रकजारणं, चक्रयन्त्रेण नाभियन्त्रेण वाऽभ्रकादिजारणं; इत्यादि यथाशास्त्रमूह्यम् । तदुक्तम्—'ऊर्ध्वं वह्निरधश्चापो मध्ये तु रससंग्रहः । सोमनालमिति प्रोक्तं जारयेद्गगनादिकम्' इति । तदुक्तं रसरत्नाकरे—"हिङ्गुलोत्थं तु यत्सूतं भूनागैर्मर्दयेत्र्यहम् । तप्तखल्वे ततः पात्यमूर्ध्वेलग्नं समाहरेत् ॥ पादांशं जारयेत्तस्य द्वन्द्वितं व्योमसत्त्वकम् । ततो माक्षिकसत्त्वं तु पादांशं तत्र जारयेत् ॥ पूर्ववद्बिडयोगेन, मात्रा पाकश्च पूर्ववत् । महारसैश्चोपरसैर्यत्सत्त्वं पातितं पुरा ॥ तत्सर्वं च पृथक्पादं सूते दत्त्वा विमर्दयेत् । तप्तखल्वे दिनैकं तु गर्भद्रावकसंयुतम् ॥ द्रवत्येव ततो जार्यं मूषायन्त्रे च पूर्ववत् । जीर्णे जीर्णे पुनर्देयं प्रतिसत्त्वं क्रमेण वै ॥ ततस्तस्यैव पादांशं गर्भद्रावणबीजकम् । पूर्ववद्द्रावितं जार्यं क्रमेणानेन षड्गुणम् ॥ सारणादि क्रामणान्तं तारवेधं प्रदापयेत् । सहस्रांशेन तत्स्वर्णं जाम्बूनदसमप्रभम्"—इति । गर्भद्रावकयोगमाह,—"सैन्धवेन समं ताप्यं घर्मे मर्द्यं पुटे पचेत् । पुनर्मर्द्यं पुनः पाच्यं यावद्द्वादशवारकम् ॥ अस्य तुल्यं मृतं नागं सर्वमम्लेन पेषयेत् । अनेन स्वर्णपत्राणि लिप्तानि प्रधमेद्दृढम् ॥ द्रुतं च वापितं तत्तु सप्तवारं पुनः पुनः । एतद्बीजं रसेन्द्रस्य गर्भे द्रवति मर्दनात् ॥ शिला सौवर्चलं ताप्यं गन्धं[1] कांक्षी च[2] टङ्कणम् । मर्दयेच्चकणाम्लेन सर्वमेतद्दिनावधि ॥ रसस्यैतत् षोडशांशं दत्त्वा बीजं च दापयेत् । दीयते यत्र यत्रैव तत्र द्रवति मर्दनात् ॥ अपामार्गपलाशोत्थभस्मक्षारं समाहरेत् । टङ्कणं च यवक्षारं कांक्षी चैव सुवर्चलम् । सामुद्रं सैन्धवं राजी माक्षिकं नवसारकम् ॥ कर्पूरं काञ्जिकं तुल्यं स्नुह्यर्कक्षीरमर्दितम् । मूषालेपमनेनैव कृत्वा कुर्याद्बिडेन तु । लेपमङ्गुलमानेन मूषायन्त्रमिदं भवेत् । गर्भद्रावितबीजाक्तं सूतमत्र विनिक्षिपेत् ॥ रुद्ध्वा स्वेदं दिनैकं तु करीषाग्नौ ग्रसत्यलम्"—इति । अथ भूनागसत्त्वतैलादि "सौवीरं कान्तपाषाणं तीक्ष्णपाषाणचूर्णकम् । एतेषां तुल्यभूनागचूर्णमेकत्र मर्दयेत् । अभ्रवद्वाहयेत्सत्त्वं तत्रत्यैरौषधैर्धमेत्[3] ॥ दिनं भूनागसंतुल्यं घर्मे सौवीरमञ्जनम् । पञ्चमाहिषसंमिश्रं कृत्वाऽथ वटकीकृतम् ॥ तस्मात्पातालयन्त्रेण तैलं ग्राह्यं पुटेन वै । भूलतां तु गवां मूत्रैः क्षालयेत्तामिराहरेत् । तैलं पातालयन्त्रेण तत्तैलं जारणे हितम् ॥ भूलतां कान्तपाषाणं चूर्णीकृत्य समं समम् ॥ तत्सत्त्वमभ्रवद्ग्राह्यं तत्रत्यैरौषधैः सह । तप्तखल्वे शुद्धसूतं जीवभूनागसंयुतम् ॥ त्रिदिनं मर्दयेद्गाढं तत्समस्तं समं समम् । भूनागचूर्णयुक्तायां मूषायां सन्निवेशयेत् ॥ तदूर्ध्वं भूलताचूर्णं दत्त्वा रुद्ध्वाऽथ मुद्रयेत् । गर्तान्तर्गोमयं सान्द्रं क्षिप्त्वा मूषां निवेशयेत् ॥ पादमग्नां तु तां गर्ते करीषतुषवह्निना । पुटे पचेद्दिनैकं तु समुद्धृत्याथ दापयेत् ॥ ऊर्ध्वाधो भूलताचूर्णं दत्त्वा तद्वत्पुटे पचेत् । मासमात्रमिदं कुर्याद्भवेर्दग्निसहो[4] रसः ॥ जायते

१ 'गन्धकासीसटङ्कणम्' इति पा० । २ 'कासीसं च' इति पा० । ३ 'शोषयेत्' इति पा० । ४ '०दग्निमुखो' इति पा० ।

मूर्तिबद्धश्च राक्षसो वडवामुखः । ग्रसते सर्वलोहानि सत्त्वानि विविधानि च ॥ वज्रादिसर्वरत्नानि द्रुतानि च मृतानि च । गुह्यसूतो ह्ययं ख्यातो वक्ष्यते तस्य जारणम् ॥ अस्यैव षोडशांशेन दत्त्वा भूनागसत्त्वकम् । तद्वत्खल्वे दिनं मर्द्यं ततो सिद्धबिडान्वितम् ॥ भूनागतैललिप्तायां मूषायां सन्निवेशयेत् । रुद्ध्वा स्वेद्यं करीषाग्नौ जीर्णे सत्त्वे तु पूर्ववत् ॥ दत्त्वा मर्द्यं तप्तखल्वे बिडो देयो दशांशतः । पूर्ववल्लिप्तमूषायां जारयेत्स्वेदनेन वै ॥ एवं सत्त्वं समं जार्यं पूर्ववत्कच्छपेन वा । गर्भद्रावणबीजं वा पूर्ववत्षड्गुणं शनैः ॥ जारयेद्द्रावितं गर्भे मूषायन्त्रे तु पूर्ववत् । ततस्तु रञ्जकं बीजं जार्यमस्यैव षड्गुणम् ॥ ततस्तु पक्वबीजेन सप्तशृङ्खलिकाक्रमात् । जारणं सारणं कुर्यान्मुखं बद्ध्वा च वेधयेत् ॥ अनेन कोटिभागेन चन्द्रार्कं काञ्चनं भवेत् । शाकवृक्षस्य पत्राणां कोमलानां द्रवं हरेत् ॥ द्रवं च ब्रह्मपुष्पाणां विष्णुक्रान्ताद्रवं तथा । इष्टिकागर्भमध्ये तु संशुद्धं पारदं क्षिपेत् ॥ मुखं स्वच्छेन वस्त्रेण छादयेत्तस्य पृष्ठतः । दशांशं पूर्वगन्धं तु दत्त्वा श्रावेण रोधयेत् ॥ पृष्ठे लघुपुटो देयो जीर्णे गन्धं पुनः क्षिपेत् । तद्वज्जार्यं पुटेनैव पुनर्देयं तु गन्धकम् ॥ एवं जार्यं समं गन्धं ततो यन्त्रात्समुद्धरेत् । अथवा गन्धकं तुल्यं तुलायन्त्रे रसस्य तु ॥ जारयेत्पूर्वयोगेन काचकूप्यन्तरेऽपि वा"–इति । "अथ वक्ष्ये रसेन्द्रस्य वासितस्य मुखक्रमम् । येन व्योमादि वैक्रान्तं चरत्याश्वभिषेचितम् ॥ अम्लवेतसजम्बीरबीजपूरकभूखगैः । त्रिदिनं मर्दयेत्सूतं भूनागैश्च दिनत्रयम् ॥ तप्तखल्वे दृढं मर्द्यं सूतस्येत्थं मुखं भवेत् । वंशनाले घृतं सूतं भाण्डे गोमूत्रपूरिते । त्रिसप्ताहं पचेच्चुल्यां सूतस्येत्थं मुखं भवेत्" इति । मतान्तरम्–"मध्ये गर्तसमायुक्तं कारयेदिष्टिकाद्वयम् । धान्याभ्रं गन्धकं शुद्धं प्रत्येकं दशनिष्ककम् । मासं जम्बीरजैर्द्रावैर्मर्द्यं तेनैव लेपयेत् ॥ गर्तद्वयं समांशेन ह्यधोगर्ते सुशोधितम् । विंशनिष्कं क्षिपेत्सूतं मूर्ध्नि देयाऽपरेष्टिका ॥ लिप्त्वा मृल्लवणैः संधिं दीपाग्निं ज्वालयेदधः । अविच्छिन्नं दिवारात्रौ यावत्सप्तदिनावधि ॥ स्वाङ्गशीतं समुद्धृत्य रसं किट्टविसर्जितम् । इत्येवं तु त्रिधा कुर्याद्रसस्येत्थं मुखं भवेत्"—इति मुखकरणम् । योगान्तरमाह–शीलेत्यादि । चणकाम्लं चणकक्षारः । बीजं पक्वबीजम् । गर्भद्रावणबीजस्य योगान्तरमाह—अपामार्गेत्यादि । कांक्षिका सौराष्ट्री, मूषाऽत्र गर्भद्रावणमूषा पूर्वमुक्ता, अनेन प्रकाशिता वा । अथ गुह्यसूतं वक्तुं भूनागतैलादिकमाह–सौवीरकान्तपाषाणमित्यादि । अभ्रसत्त्वप्रकारस्तु पूर्वमुक्तः । द्वितीयं योगान्तरमाह–दिनं भूनागमित्यादि । पातालयन्त्रं च यन्त्रप्रकरणे द्रष्टव्यम् । द्वितीयं तैलप्रकारमाह—भूलतेत्यादि । सत्त्वप्रकारान्तरमाह—भूलता कान्तपाषाणमित्यादि । अग्निसहकरणमाह—तप्तखल्वे इत्यादि । वडवामुख इत्यन्तेन स्पष्टत्वात्पूर्वमुक्तत्वाच्च स्पष्टम् । गुह्यमित्येतस्य नाम

---

१ 'तप्तखल्वे' इति पा० । २ 'भूगर्तायां' इति पा० । ३ 'पूर्ववचापि' इति पा० । ४ 'व्योमादिकं सत्त्वं' इति पा० ।

सुबुद्धिभिर्ज्ञेयम् । अस्यैव बीजचारणजारणमाह—अस्यैव षोडशांशेनेत्यादि । सप्तराङ्गलिकाचारणजारणसारणादिभेदेन तस्य फलमाह—जारणं सारणं कुर्यादिति । स्वर्णनागं समावर्त्येत्यत्र व्याख्यानं प्रकाशितं' स्पष्टत्वाच्च सुबुद्धिभिर्ज्ञेयम् । शाकवृक्षेत्यादि काचकुप्यन्तं स्पष्टं प्रकाशितं च । गन्धकवासितस्याभ्रकजारणार्थं मुखकरणमाह—अथ वक्ष्ये इत्यादि मुखं भवेदित्यन्तेन । मुखार्थं सिद्धयोगमाह—वंशनाले घृतमित्यारभ्य सूतस्येत्थं मुखं भवेदित्यन्तेन । त्रिसप्ताहमेकविंशतिदिनपर्यन्तमनवच्छिन्नं, रंन्ध्राणं तु सिक्थकेन जलमृत्तिकया वा । मतान्तरेण मुखकरणमाह—मध्ये गर्तमित्यारभ्य मुखं भवेदित्यन्तम् ॥ ८० ॥

प्रकारान्तरमाह—

**स्थालीयन्त्रविधानतश्च मसृणां गन्धस्य संचारणां**
**यन्त्रे गर्भसमुद्भवेऽथ सिकताहंसे तु कूप्यां पुनः ।**
**यन्त्रे सैकतसंभवे च नलिकायन्त्रे हि मूषाभिधे**
**यन्त्रे भूधरसंज्ञके त्वथ पुनः सोमानले चक्रके ॥ ८१ ॥**

**यन्त्रे नाभिसुसंज्ञके जलसमुद्भूते दृढे लोहजे**
**ग्रस्ते मूषिकया कृते सुविमले विद्याधरे डामरे ।**
**स्थालीयन्त्रवरे तु धूपनविधौ धूपाभिधे पालिका-**
**यन्त्रे गन्धकजारणां सुविमले कुर्याद्यथायोग्यतः ॥ ८२ ॥**

**टी०**—इति स्पष्टम् । रसवाग्भट्टे तु गन्धकजारणार्थं यन्त्रान्तराण्युक्तानि, तान्यत्र लिख्यन्ते,—"रसोनकवसां भाण्डे यत्नतो वस्त्रगालिताम् । दापयेत्प्रचुरं यत्नादाप्लाव्य रसगन्धकौ ॥ स्थालिकायां पिधायोर्ध्वं स्थालीमन्यां दृढां कुरु । संन्धिं विलेपयेद्यत्नान्मृदा वस्त्रेण चैव हि ॥ स्थाल्यन्तरे कपोताख्यं पुटं कर्षाग्निना सदा । यन्त्रस्याधः करीषाग्निं दद्यात्तीव्राग्निमेव वा ॥ एवं द्वित्रिदिनं कुर्यात्ततो यन्त्रं विमोचयेत् । तप्तोदके तप्तचुल्ल्यां न कुर्याच्छीतले क्रियाम् । न तत्र क्षीयते सूतो न च गच्छति कुत्रचित् । अनेन च क्रमेणैव कुर्याद्गन्धकजारणम्"—इति । अत्र रसोनकवसा कन्दान्तर्वत्यङ्कुरविशेष इति केचित्, अथवा तत्परित्यज्य उपरिभागः सर्वैर्गृह्यते । तस्य शुष्कताकरणार्थं यत्नादित्युक्तम् । रसगन्धकयोर्भावनं, चक्रिकां कृत्वा ऊर्ध्वाधश्चूर्णं दत्त्वा निरोधयेत् । तदुपरि ऊर्ध्वमुखामेकां स्थालीं दद्यात् । तत्र संधिलेपानन्तरं स्थालीमध्ये पुटं दद्यात् । अन्यच्च स्पष्टम् । स्थालीयन्त्रं प्रकारान्तरेणाह—"गर्भयन्त्रं प्रवक्ष्यामि पिष्टिकाभस्मकारकम् । चतुरङ्गुलदीर्घां तु त्र्यङ्गुलो-

---

१ 'रसमुद्रणं तु' इति पाठः । २ 'गुह्ये' इति पाठः । ३ 'भद्रे' 'भद्रां' इति च पा० ।

न्मितविस्तराम् । मृन्मयीं सुदृढां मूषां वर्तुलं कारयेन्मुखम् । लोहस्य विंशतिर्भागा भाग एकस्तु गुग्गुलोः ॥ सुश्लक्ष्णं पेषयित्वा तु वारंवारं प्रयत्नतः । मूषालेपं दृढं कृत्वा लवणार्धमृदम्बुभिः ॥ कर्षैस्तुषाग्निना भूमौ स्वेदयेन्मृदु मानवित् । अहोरात्रं त्रिरात्रं वा रसेन्द्रो भस्मतां व्रजेत्'' इति ॥ ८१ ॥ ८२ ॥

रससिन्दूरप्रकारमाह—

**सूतं पञ्चपलं सपादपलकं गन्धं च टङ्कद्वयं**
**चुल्लीलोणमथो विमर्द्य सकलं कांक्ष्यास्तु कर्षं पुनः ।**
**यद्वा गन्धसमं तदर्धमथवा यन्त्रे दृढे शार्करे**
**कूप्यां घस्रचतुष्टयं रसवरः सिन्दूरतुल्यो भवेत् ॥ ८३ ॥**

ग्रन्थान्तरस्थाः प्रकारा अत्रैव लिख्यन्ते,—''खर्परं सिकतापूर्णं कृत्वा तस्योपरि न्यसेत् । अपरं खर्परं तत्र शनैर्मृद्वग्निना पचेत् ॥ पञ्चक्षारैस्तथा मूत्रैर्लवणं च बिडं तथा । हंसपाकं समाख्यातं यन्त्रं तद्वार्तिकोत्तमैः'—इति । ''सरसां गूढवक्त्रां मृद्वस्त्राङ्गुलघनावृताम् । शोषितां काचकलसीं पूरयेत्त्रिषु भागयोः ॥ भाण्डे वितस्तिगम्भीरे वालुकासु प्रतिष्ठिते । भाण्डं तु पूरयेत्ताभिरन्याभिरवगुण्ठयेत् ॥ भाण्डवक्त्रं मणिकया संधिं लिम्पेन्मृदा पचेत् । चुल्ल्यां तृणस्य चादाहान्माणिकापृष्ठवर्तिनः ॥ एतद्धि वालुकायन्त्रं तद्वत्तु लवणाश्रयम्''—इति । पूर्वत्र अन्धमूषैव ग्राह्या । तुषपुटं तु प्रागभिहितम् । भूमावित्यनेन भूधरयन्त्रमेव गृह्यते । अथवा,—''शरावसंपुटस्थं तु करीषैरग्निमानवित् । पचेत्तु चुल्ल्यां यामं वा रसं तत्पुटयन्त्रकम्''—इति । इदं पुटयन्त्रकं तु ताम्रादिसाधने न तु रसभस्मादौ । वालुकायन्त्रे कूपी मृत्तिकया दृढाऽग्निसहा कार्या । उक्तं च,—''श्वेताश्मानस्तुषा दग्धाः शिखित्राः शणखर्परौ । लद्दिः किट्टं कृष्णमृच्च संयोज्याः कूपिकामृदि''—इति । अथवा कौलाली ग्राह्या । तुषमेकं भागं श्वेतमृत्तिकैकभागां कृष्णमृत्तिकैकभागां वस्त्रखण्डमेकभागं कुट्टयित्वा लेपः कार्यः । वस्त्रखण्डानि तु संप्रदायात्सप्तैव । एवं वालुकायन्त्रस्यापि मृत्कर्पटादि, मध्ये छिद्रं च कार्यम् । वालुका पञ्चाढकप्रमाणा देया । एवं लवणयन्त्रे परिमाणं कर्तव्यता च ज्ञेया । गन्धकजारणार्थं पलिकायन्त्रं, तच्च—''चषकं वर्तुलं लौहं विनताग्रोर्ध्वदण्डकम् । एतद्धि पालिकायन्त्रं बलिजारणहेतवे''—इति । एतच्च दीपाग्निना घटिकामात्रेण कृष्णरसभस्मकरणे । तत्र लोहपात्रे गन्धकं द्रावयित्वा पारदो देयः, पश्चाल्लोहदण्डेन एकीकृत्य करणीयम् । तदुक्तं कैश्चित्,— ''सूतः पञ्चपलः स्वदोषरहितस्तत्तुल्यभागो बलिर्द्वौ टङ्कौ नवसागरस्य तुवरीकर्षश्च संमर्दितः । कूपे काचकृते स्थितश्च सिकतायन्त्रे त्रिभिर्वासरैः पक्वो वह्निभिरुद्भवत्तरुणभाः सिन्दूरनामा रसः''—इति । रसराजलक्ष्म्यां तु—''कूपी सप्तमृदंशुकैः

परिवृता शुष्काऽत्र गन्धेश्वरौ तुल्यांशौ नवसारपादकलितौ संमर्द्य यामं न्यसेत् । सा यन्त्रे सिकताख्यके तलबिले पक्काऽर्कयामं हिमं भित्वा कुङ्कुमपिञ्जरं रसवरं भस्मादद्वैद्यराट् ॥ पाके रुद्धं मुखं कूप्या नवसारेण जायते । ततः शलाकया कुर्यात्कूपिकानाशशान्तये ॥ अनेन विधिना पाका यावन्तोऽस्य भवन्ति हि । तावन्तो हि गुणोत्कर्षा जायन्ते रसभस्मनः"–इति । केचित्तु–"भागो रसस्य त्रय एव भागा गन्धस्य माषः पवनाशनस्य । संमर्द्य गाढं सकलं सुभाण्डे तां कज्जलीं काचकृते विदध्यात् ॥ संरुध्य मृत्कर्पटकैर्घटीं तां मुखे सचूर्णां खटिकां च दद्यात् । क्रमाग्निना त्रीणि दिनानि पक्त्वा तां वालुकायन्त्रगतां ततः स्यात् ॥ बन्धूकपुष्पारुणमीशजस्य भस्म प्रयोज्यं सकलामयेषु । निजानुपानैर्मरणं जरां च हन्त्यस्य वल्लः क्रमसेवनेन"–इति । पूर्वत्र पादांशो नवसागर इत्युक्तं, इह तु संप्रदायात् गद्याणत्रयस्य माषो नवसार इति गद्याणमात्रं पारदः, गद्याणत्रयं गन्धकः, एकस्तु माषो नवसागर इति श्लोकार्थ, इति न विरोधः । केचन पवनाशनशब्देन सीसकं व्याचक्षते, तत्तु धातुवादादावुपयुज्यत इति ज्ञेयम् । अत एव वृद्धाः भागशब्दः कर्षवाची, अर्धपलं शुद्धरसं, कर्षत्रितयं विशुद्धगन्धस्य, सीसकमाषमिति वचनात्; पारदगन्धकं समभागं अर्धं वा गन्धकं चतुर्थांशं वा दत्त्वा कज्जलीं कुर्वन्ति । मेघनादपादास्तु गन्धक एकभागः, रसोऽप्येकभागः, पादभागस्तु हरितालः, तथैव मनःशिला, एतेषां कज्जलीं कूपिकायां प्रयच्छन्ति, तन्मध्ये सोमलक्षारं तोलके माषमात्रं प्रयच्छन्ति, अन्यत्पूर्ववत् । पाके तु प्रथमतो गन्धकं खर्परे द्रावयित्वा, तन्मध्ये रसं दत्त्वा, लोहदण्डेन चालयित्वा, यावत्तैलक्षयो भवति तावत्पाकः, पश्चात्खल्वे मर्दनं कृत्वा, कूपिकामध्ये प्रयच्छन्ति । कूपिकामुखे तु यदा गन्धकक्षयो भवति तदा शलाकया निष्काश्य घर्षणे आरुण्योत्पत्तौ मुद्रा कार्येति वदन्ति । अन्ये तु मुद्रामदत्त्वैव रसभस्म संपादयन्ति, अपरे तु संप्रदायात्कूपिकामुखं चक्रिकया पिधाय कुर्वन्ति । इत्यादिप्रकाराः संप्रदायाज्ज्ञेयाः ॥ ८३ ॥

रसकर्पूरप्रकारस्तु—

**कासीसं खटिका च सिन्धुलवणं क्षुण्णं त्रिभागं रसा-**
**न्मर्द्यं शुष्कमिदं दिनं मृदुतरं विद्याधरे वह्निना ।**
**ताम्रेणोर्ध्वविलग्नशङ्खधवलं संगृह्य कूप्यां न्यसे-**
**त्कासीसं लवणं च तुल्यमभितो दद्यात्पचेत्पूर्ववत् ॥ ८४ ॥**
**यद्वोन्मत्तककाकमाचिकरसैर्व्याघ्रीरसैः पूर्वव-**
**त्पाच्यं डामरयन्त्रके लवणयुक्कूप्यां च तद्वन्न्यसेत् ।**

---

१ 'तस्यां' इति पा० ।

स्पष्टं; तदुक्तम्,—"सूतस्फटिकसिन्धूत्थखटिकाः क्रमवर्धिताः । ततश्चुल्ल्यां चतुर्यामं शुभ्रं कर्पूरसुन्दरम्"—इति । अत्र डमरुकायन्त्रेण पाकः । तच्च, "यन्त्रस्थाल्युपरि स्थालीं न्युब्जां दत्त्वा निरोधयेत् । यन्त्रं डमरुकाख्यं तद्रसभस्मकृते हितम्"—इति । अनेन कर्पूरतुल्यं भस्म उपरिभाण्डलग्नं गृहीत्वा पश्चात्कूपिकायामेतान्यौषधानि पुनर्दत्त्वा, चतुर्याममग्निं दत्त्वा ऊर्ध्वं खोटो भवति । केचित्तु—"भागैकं नवसारटङ्कणफणी कासीसकं तूवरी श्वेता गैरिकसैन्धवं लवणजं सर्वैः समं पारदम् । आकाशस्थितवल्लिराक्षसलतातोयैस्त्रिभिर्मर्दयेत्कूप्यां स्थाप्य निरोधयेच्छुभदिने यन्त्रे गतं पाचयेत् ॥ आदौ दद्याच्च मन्दं तदनु दृढतरं वेदसंख्यादिनान्ते पश्चाच्छीतं प्रकुर्यात् स्फटिकमणिनिभं जायते सूतभस्म"—इति ॥ ८४ ॥—

प्रकारान्तरमाह—

**भागाः षट् तु रसस्य सिन्धुलवणात्सप्तैव सौराष्ट्रित-**
**स्तद्वन्द्वं च सुवर्णगैरिकभवा भागास्तथा विंशतिः ॥ ८५ ॥**
**एकीकृत्य रसेन मर्दितमिदं यन्त्रे तु विद्याधरे;**
**कासीसं स्फटिका सुवर्णगिरिजा मृद्रञ्जिका मृत्तिका ।**
**वल्मीकप्रभवा खटी च लवणं सिन्धोः समं हण्डिका-**
**यामास्थाप्य तदूर्ध्वतश्च विमलं फेनस्य मूषाद्वयम् ॥ ८६ ॥**
**मध्येऽस्मिन्नसराजकं विनिहितं दत्त्वा तदूर्ध्वं पुन-**
**र्मृत्स्नां तां परितो निरुध्य विमलं पात्रं मुखे मुद्रितम् ।**
**दद्याद्वासरसप्तकं दृढतरं वह्निं ततः शीतलं**
**ग्राह्यं स्फाटिकसंनिभं रसवरं दद्याद्यथायोगतः ॥ ८७ ॥**

अस्य प्रकारान्तरं तु—राजिकारसोनाभ्यां मूषाद्वयं कृत्वा, रसं निक्षिप्य, पूर्वंदोलास्वेदं कुर्यात्; काकमाचीचित्रकत्रिफलारसैर्मर्दितं, तत्पादतस्तदर्धं वा सैन्धवं दत्त्वा, निम्बूरसेन मर्दयि वा, राजिकारसोनटङ्कणनवसारतुत्थैस्तुषाम्बुना मर्दयित्वा, वटिकां कृत्वा, हिङ्गुना लेपयित्वा, स्थालीसंपुटे रुद्ध्वा, लवणेन पूरयित्वा, तदुपरि स्थालीं दत्त्वा, मुद्रां कृत्वा, अधोऽग्निमूर्ध्वस्थाल्यां जलं दत्त्वा, प्रहरत्रयमग्निं दद्यात्; ऊर्ध्वलग्नं रसं गृहीत्वा, विषोपविषकषायेण मर्दयित्वा, त्रिकटुकक्षारराजीलवणपञ्चकनवसारटङ्कणं रसषोडशांशं दत्त्वा, मर्दयित्वा, पश्चाद्गन्धकजारणं कुर्यात् । कूपिकायन्त्रे इष्टिकायन्त्रे वा

१ 'सञ्चयजं' इति पा० । २ 'कुर्यात्' इति पा० । ३ 'दृढदृढं' इति पा० । ४ 'समराजिकं' इति पा० । ५ 'पूर्वं दोलास्वेदं' इति पा० ।

कृत्वा तस्य रसस्य भागा इत्यादि रसकर्पूरप्रकारो ज्ञेयो रसकल्पलतायामिति । केचित्तु "पिष्टं पांसुपटुप्रगाढममलं वज्र्यम्बुनाऽनेकशः सूतं धातुयुतं खटीकवलितं तं संपुटे रोधयेत् । अन्तःस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं हठाद्भस्त्रं ग्राह्यमथेन्दु-कुन्दधवलं भस्मोपरिस्थं शनैः ॥ तद्वल्लद्वितयं लवङ्गसहितं प्रातः प्रयुक्तं भजेदूर्ध्वं रेचयति द्वियाममसकृत्पेयं जलं शीतलम् । एतद्धन्ति च वत्सरावधि विषं षाण्मासिकं मासिकं शैलोत्थं गरलं मृगेन्द्रजटिलोद्भूतं च तात्कालिकम्–" इति लवणभेदि सुधानिधिरसः । "उत्क्षिप्तमूलं विषजं विदध्याद्गर्भेषु सूतं कनकांशपिष्टम् । संवेष्टयेत्कोलभवेन तत्तु मांसेन पश्चाद्विपचेद्द्वियामम् ॥ धत्तूरवज्रोद्भवतैलगर्भे संवर्तिता चापि मुखस्थितेयम् । संभोगकाले दृढतां करोति वीर्यस्य दुग्धं भजतां नराणाम्"–इति हिरण्यगर्भगुटिका । अत्रैवं रसकर्पूरे भागकल्पना-रसभागाः षट्, सैन्धवं सप्तभागं, सौराष्ट्री चतुर्दशभागा, गैरिकं विंशतिभागिकं, एतदेकीकृत्य डमरुयन्त्रेण पचेत् । तदेव कूप्यां दत्त्वा पुनः पचेत् । रसरत्नाकरस्तु,–"रसाद्द्विगुणितं गन्धं खल्वे कुर्याच्च कज्जलीम् । तोयेनोत्तरवारुण्या भावयेत्सप्तधा भिषक् ॥ निक्षिप्य कज्जलीं कूप्यां पूर्वतोयेन पूरयेत् । मुखे मुद्रां प्रकुर्वीत भूमौ गर्तां च कारयेत् ॥ हस्तमात्रप्रमाणेन तत्र कूपीं विनिक्षिपेत् । सा गर्ता सिकतापूर्णा द्व्यङ्गुला कूपिकोपरि ॥ ततः कुम्भिपुटं दद्यादेकविंशतिवारकम् । जायते तु तले भस्म हिङ्गुलाभं सुनिश्चितम् ॥ द्विवल्लं घृतखण्डाभ्यां वीर्यस्तम्भं करोति च"–इति । यद्वा, "शुद्धसूतं समं तुत्थं घनक्वाथेन सप्तधा । भावयित्वा रसं कूप्यां मुखे मुद्रां च कारयेत् ॥ वालुकायन्त्रमध्येऽग्निं दिनैकं ज्वालयेदधः । रसकर्पूरविख्यातः खोटबद्धो भवेद्रसः"–इति । "क्षीरेणोत्तरवारुण्या त्रिदिनं शुद्धपारदम् । मर्दयेत्तु सदा खल्वे वज्रमूषान्वितं पुटेत् । करीषाग्नौ दिवारात्रं पचेत्सम्यगतन्द्रितः । तमुद्धृत्य पुनर्मर्द्यं तद्वद्रुद्ध्वा च पाचयेत् ॥ तद्वन्मर्द्यं पुनः पाच्यं म्रियते पाण्डुरो रसः"–इति । यद्वा,–"पलं सूतं पलं गन्धं कृष्णोन्मत्तद्रवैस्त्र्यहम् । मर्दितं वज्रमूषायां चक्रीकृत्वा पिधाय च ॥ दिनान्ते तत्समुद्धृत्य तद्वन्मर्द्यं च पाचयेत् । एवं सप्तदिनं कुर्यान्मृतो भवति वै रसः ॥ रसः पन्नगवर्णस्तु चन्द्रार्कौ वेध(ष्ट)येत्क्रमात् । रुद्ध्वा मूषान्वितं धार्यं दिव्यं भवति काञ्चनम्"–इति ॥ गर्तमध्ये वालुकां, तदुपरि मूषां वालुकयाऽऽच्छाद्य बाह्यगर्ते सर्वतोऽग्निः । हिङ्गुलप्रकारस्तु,–"अशुद्धं पारदं भागं चतुर्भागं च गन्धकम् । उभौ क्षिप्त्वा लोहपात्रे क्षणं मृद्वग्निना पचेत् ॥ तस्मिन्मनःशिलाचूर्णं पारदाद्दशमांशिकम् । क्षिप्त्वा चाल्यमयोदर्व्या ह्यवतार्य सुशीतलम् ॥ कृत्वा च तुण्डशकलान् काचकूप्यां निरुध्य च । वस्त्रमृत्तिकया सम्यक्काचकूपीं प्रलेपयेत् ॥ सर्वतोऽङ्गुलमानेन छायाशुष्कां तु कारयेत् । वालुकायन्त्रगर्भे तु दिनं मृद्वग्निना पचेत् ॥ क्रमवृद्धाग्निना पश्चात्पचेद्दिवसपञ्चकम् । सप्ता-

१ 'धान्ये' इति पा० । २ 'पिष्ट्वा' इति पा० ।

हात्तु समुद्धृत्य हिङ्गुलः स्यान्मनोहरः"–इति। यद्वा "अङ्कोल्लजेपालजधूर्तबीजतैलेन मर्द्या रसकज्जली सा। पश्चात्सुभाव्या विषखर्परस्य रसेन चार्कस्य दिनानि सप्त॥ विषतिन्दुकबीजस्य क्काथेन च दिनत्रयम्। पश्चात्कूप्यां विनिक्षिप्य पचेद्दिनचतुष्टयम्"–इति। समुद्रशोषसमुद्रफलगुञ्जाविषाहिफेनभावनाऽपि देया, कुमारीरसेन सप्त, अयमपि हिङ्गुलतुल्य इति। इदानीं गन्धकं विना रसभस्मप्रकारमाह— "पञ्चाङ्गीबर्बरीलिङ्गीद्रवैर्घस्त्रत्रयं रसः। मर्दितः पुटितो भस्म स्वर्णवर्णं प्रजायते"–इति; पुटं चात्र "गोष्ठान्तर्गोक्षुरक्षुण्णं शुष्कं चूर्णितगोमयम्। गोवरैर्वा तुषैर्वापि पुटं यत्र प्रदीयते। तद्गोवरपुटं प्रोक्तं रसभस्मप्रसिद्धये॥ शरावसंपुटान्तःस्थं करीषैश्चाग्निमानवित्॥ पचेत्तु चुल्ह्यां यामं वा रसं तत्पुटयन्त्रकम्। वल्लीपलाशजैर्मूलैर्बीजैः पालाशसंभवैः॥ जम्बीराम्लैर्मर्दितं तु पुन्नागयुतमाशु तत्। यन्त्रे डमरुकाख्ये च पाचितं म्रियते क्षणात्–" इति। दिव्यौषधयस्तु—"भार्ङ्गी मूषकपर्णी च शरपुङ्खोर्ध्वपुष्पिका। अर्वाक्पुष्पी रुदन्ती च भेकपर्णी गवाक्षिका॥ पुनर्नवा शिखिशिखा कुठारच्छिन्नकाकुली। गोपालकर्कटी चेन्द्रगोपी वासनिका तथा॥ सुमेरा राक्षसी नागदन्ती नागार्जुनी तथा। काण्डवल्ली त्रिधारा च वज्री रक्तत्रिधारकः॥ आदित्यभक्ताऽपामार्गबीजमेरण्डसंभवम्। देवदाली हरिक्रान्ता नाकुली देवपुष्पिका॥ कर्कोटी करहुञ्ची च होलिनी क्षीरकन्दकः। वज्रकं वज्रकन्दश्च काण्डवल्लीति मूलिकाः। भावने पुटपाके च योज्याः सर्वत्र भस्मनि"–इति रसपद्धत्यां रससिन्दूरादिनिरूपणम्॥ ८५–८७॥

अथ राजमृगाङ्कादौ रत्नानामुपयोगात्तेषां लक्षणपरीक्षाः निरूपयितुं प्रतिजानीते–

**वज्रं विद्रुममौक्तिके मरकतं वैदूर्यगोमेदके**
**माणिक्यं हरिनीलपुष्पदृषदौ रत्नानि नाम्ना नव।**
**यान्यन्यान्यपि सन्ति कानिचिदिह त्रैलोक्यसीम्नि स्फुटं**
**नाम्ना तान्युपरत्नतामुपगतान्याहुः परीक्षाकृतः॥ ८८॥**

**टी०**—परीक्षासु पण्डिता नवरत्नानि जगुः। नवत्वं संख्यातिरेकनियमार्थं; स्फटिकादीनामपि रत्नत्वात्कथं नवत्वानतिरेकः? तेषामुपरत्नत्वेन गणितत्वात्। अत एवाह—यान्यन्यानीति। हीरकप्रवालमौक्तिकगरुडोद्गारवैदूर्यगोमेदमाणिक्येन्द्रनीलपुष्परागाः रत्नानि; एभ्योऽन्यानि वैक्रान्तसूर्यकान्तराजावर्तलालपेरोजाख्यानि, अन्यानि नीलपीतश्वेतकरकरूपाणि मणितुल्यानि उपरत्नानि जगुः। सीमाशब्दः खनिवाची। स्फुटशब्दो लोकप्रसिद्धिं द्योतयति। "धारयेत्सततं रत्नसिद्धमन्त्रमहौषधीः" इति वचनात्, ग्रहदुष्टौ रत्नदानं धारणं च विहितं, अतो रत्नानां तत्र ग्रहाधिकरणत्वम्[1]॥ ८८॥

---

१ 'ग्रहादिवारणत्वं' इति पा०।

ग्रहानुमैत्र्या मुद्रिकासु न्यस्तानां नवरत्नानां तत्तद्ग्रहोत्पादितातापनिवर्तकत्वं दर्शितमाचार्यैर्ग्रथितवद्भिरतो नवरत्नमुद्रिकान्यासप्रकारमाह—

**दिक्प्राची कुलिशस्य मौक्तिकमणेराग्नेयिका दक्षिणा**
**दिग्वल्लीप्रभवस्य नैर्ऋतककुप् गोमेदसो वारुणी ॥**
**नीलांशोरथ दिग्विदूरजमणेर्वायोः कुबेरस्य दिक्**
**पुष्पस्याथ हरिन्मणेर्हरहरिच्छेषस्य शेषा हरित् ॥ ८९ ॥**

**टी०**—हीरकादिन्यासः प्राच्यादिक्रमेण ज्ञेयः । 'कुलिशं भिदुरं पविः' इत्यमरः । वल्लीप्रभवं प्रवालम् । नीलांशुरिन्द्रनीलः । विदूरजं वैदूर्यम् । पुष्पं पुष्परागः। हरिन्मणिः गरुडोद्गारः । हरहरित् ऐशानी । शेषस्य माणिक्यस्य, शेषा मध्या, कर्णिकायां न्यसेदित्यर्थः । अयमेकः प्रकारो मुद्रिकायाः ॥ ८९ ॥

अशक्तस्य ग्रहप्रातिकूल्ये धारणदाने आह—

**माणिक्यं द्युमणेर्बुधस्य गरुडोद्गारो गुरोः पुष्पकं**
**गोमेदं तमसः प्रवालमवनीसूनोर्विधोर्मौक्तिकम् ।**
**नीलं मन्दगतेः कवेस्तु कुलिशं केतोर्बिडालाक्षकं**
**रत्नं रत्नविदो वदन्ति विहितं दाने तथा धारणे ॥ ९० ॥**

**टी०**—द्युमणिः सूर्यः । तमो राहुः । 'तमस्तु राहुः स्वर्भानुः' इत्यमरः । अवनीसूनोर्मङ्गलस्य । मन्दगतेः शनैश्चरस्य । कवेः शुक्रस्य । बिडालाक्षकं विदूरमणिः । एतेषां प्रातिकूल्ये यथासंभवं धारणं दानं च कार्यम् । अन्ये तु "माणिक्यमुक्ताफलविद्रुमाणि तार्क्ष्यं च पुष्पं भिदुरं च नीलम् । गोमेदकं चाथ विदूरकं च क्रमेण रत्नानि नवग्रहाणाम् । ग्रहानुमैत्र्या कुरुविन्दपुष्पप्रवालमुक्ताफलतार्क्ष्यवज्रम् । नीलाख्यगोमेदविदूरकं च क्रमेण मुद्राधृतमिष्टसिध्यै"—इति । ग्रहेति ज्योतिःशास्त्रप्रकारेण । तानि रत्नानि शुद्धानि सुजातीनि दोषनिर्मुक्तानि धार्याणीत्युक्तम् ॥ ९० ॥—

तेषु वज्रस्याभ्यर्हितत्वात्तदुत्पत्त्याद्याह—

**जातः प्राग्बलनामको दितिसुतोऽवध्यस्त्रिलोक्यां पुन-**
**र्देवैर्देहमयं मखे मणितनुः सर्वात्मना याचितः ।**
**दत्त्वाऽथ स्वशरीरमव्यथमयं धीरः सुराणां पुर-**
**स्तस्थौ तैः स तु सप्ततन्तुभुजिभिः स्वर्गेश्वरायार्पितः ॥९१॥**
**चिच्छेदाथ शिरोऽस्य वज्रशिरसो वज्रेण वज्री पुन-**
**र्भूतो रत्नसमुच्चयो बल इति स्माहुः पुराणर्षयः ।**

टी०—प्राक्कृतयुगे दितिसुतस्त्रैलोक्यामवध्यो जातः, तेन जपे(ये) आरब्धे अजेयत्वान्मणितनुरयं मखे देवैः सर्वात्मना याचितः, सर्वशरीरमस्माकं देयमिति, अथ याच्ञानन्तरं स्वशरीरं देवेभ्यो दास्यामीत्युक्त्वा अनन्तरं तेषां सुराणां संमुखं यथा भवति तथा तस्थौ, ततः सप्ततन्तुभुजिभिर्यज्ञभुग्भिस्तैः स्वर्गेश्वराय इन्द्राय अर्पितो दत्तः । अथ दानानन्तरं वज्री वज्रेणास्य वज्रतुल्यशिरसः शिरं चिच्छेद, सः रत्नसमुच्चयोऽभूत् । तं बलसमुच्चय इति पुराणर्षय आहुः स्म, तदङ्गविभागोत्पन्नत्वेन ॥ ९१ ॥—

वज्राणां संज्ञाचतुष्टयमाह—

**मूर्ध्नो वा वदनादमुष्य पवयो ये जज्ञिरे ते द्विजा**
**बाहुभ्यामुरसोऽस्य ये समभवंस्ते संस्मृताः क्षत्रियाः॥९२॥**
**नाभीतः कटितश्च ये निपतितास्ते नाम भूमिस्पृशो**
**जानुद्वन्द्वपदद्वयप्रपतितास्ते नाम शूद्रा मताः ॥**

टी०—अमुष्य वदनान्मूर्ध्नो वाऽपि ये पवयो जातास्ते द्विजा ब्राह्मणसंज्ञया जज्ञिरे । ये बाहुभ्यामुरस उत्पन्नास्ते क्षत्रियाः । भूमिस्पृशो वैश्याः । जानुद्वन्द्वात्पदद्वन्द्वाच्च जाताः शूद्राः । तथा च बलशरीरात्सर्वे हीरका जाता इति भावः ॥९२॥

**पूर्वं मन्दरमथ्यमानजलधिप्रोदुत्थिता याः सुधा-**
**स्ताः प्रायः पिबतः सुरासुरगणस्यास्यादिमे बिन्दवः ॥९३॥**
**ये भूमौ पतिता विकर्तनकरव्रातैः पुनः शोषिता-**
**स्ते वज्राण्यभवञ्जनुर्ननु पवेरित्यूचिरे केचन ॥**

टी०—केचन पवेर्वज्रस्य जनुः इति जनुर्जन्म ऊचिरे उक्तवन्तः । इति किं? मन्दरेण मथ्यमानो यो जलनिधिस्तस्मात्प्रोदुत्थिता याः सुधाः अमृतानि, ताः पिबतः सुरासुरगणस्य आस्यादिमे बिन्दवः ये भूमौ प्रायः पतितास्ते वज्राणि अभवन्निति । कीदृशाः? विकर्तनः सूर्यस्तस्य करव्राताः किरणसमूहास्तैः शोषिताः कठिनतां प्राप्ताः । एतावताऽमृतोद्भवत्वेनाजरामरत्वकारित्वं सूचितम् । काठिन्यं तु भूमिस्वभावात् ॥ ९३ ॥—

उत्पत्तिमभिधाय तेषामष्टप्रकारकं विज्ञानमाह—

**उत्पत्तिर्गुणदोषजातिखनयो हस्ताङ्गुलीचालनं**
**मूल्यं मण्डलिकेति रत्नदृषदां ज्ञानं वदन्त्यष्टधा ॥ ९४ ॥**
**अत्रैकप्रसरेण नोक्तमपि तज्ज्ञानं परीक्षास्थल-**
**श्लोकैः श्लोकितमेकशः खलु विदांकुर्वन्तु वैज्ञानिकाः ॥**

---

१ 'तत्तत्तत्परीक्षा०' इति पा० ।

**टी०** उत्पत्तिः आकरभूमिः, यथा—वैरागरपर्वतोत्पन्नः समीचीनः, ततस्तु मगधदेशोत्पन्नः किंचिन्न्यूनः, तदपेक्षयाऽन्यस्थो न्यूनस्ततोऽप्यन्य इत्यादि । मण्डलिका रत्नपरीक्षकसभा । रत्नदषदामित्यनेन सर्वेषां रत्नानामेव परीक्षा कर्तव्येति प्रतिपादितम् । अत्र यद्यपि एकप्रसरेणैव नोक्तं, तथाऽपि वैज्ञानिका ज्ञातसिद्धान्ताः परीक्षकाः तत्तत्परीक्षास्थलस्था ये श्लोकास्तैः श्लोकितं कथितं, एकश एकत्र विदांकुर्वन्तु जानन्तु, यतः सिद्धान्तज्ञाः ॥ ९४ ॥—

**ब्रह्मक्षत्रियवैश्यशूद्रविभिदा ज्ञेयश्चतुर्धा पविः**
**पुंस्त्रीक्लीबविभागतः पुनरसौ प्रत्येकमुक्तस्त्रिधा ॥ ९५ ॥**

**टी०** तत्रोत्पत्तिं प्रतिपाद्य जातीराह—ब्राह्मणादिभेदात्पविश्चतुर्धा । सोऽपि प्रत्येकं त्रेधा ॥ ९५ ॥

तत्र वर्णेन द्विजादिलक्षणमाह—

**तत्र श्वेतरुचिर्द्विजः स्फटिकवद्रक्तस्तु किंचिन्नृपो**
**वैश्यः पीतरुगङ्घ्रिजस्त्वसितभास्तत्राप्ययं पूरुषः ।**
**रेखाबिन्दुविवर्जितोऽष्टफलकः स्वच्छछविर्यो भवे-**
**त्सा स्त्री या तु षडस्रबिन्दुसहिता रेखान्वितोदाहृता ॥९६॥**
**निष्कोणाश्चिपिटास्त्रिकोणवपुषो दीर्घा विपुंस्त्वाः पुन-**
**र्धार्याः स्त्रीनृनपुंसकैर्युवतिपुंषण्ढाभिधानाः क्रमात् ।**
**निःसंदेहमिह क्रतोरपि कृतेर्दानस्य वा यत्फलं**
**तत्प्राप्नोति पुमानतो वरतनोर्वज्रस्य संधारणात् ॥ ९७ ॥**
**चातुर्वर्ण्यपरिग्रहादपि चतुर्वर्णाश्रयश्रेयसा**
**संयुक्तामुररीकरोति न कथंकारं स भूतिं पराम् ।**

**टी०**—तत्रेति । यः स्फटिकवच्छ्वेतरुचिः स द्विजः । यः किंचिद्रक्तः स नृपः क्षत्रियः । यः पीतरुक्स वैश्यः । यश्चासितभाः सोऽङ्घ्रिजः शूद्रः । पुंस्त्र्यादिलक्षणमाह—तत्रेत्यादि । रेखाबिन्दुविवर्जितोऽष्टफलकः स्वच्छछविर्यः भवेत्सः पूरुषः । षडस्रा बिन्दुसहिता रेखान्विता च सा स्त्री उदाहृता । ये निष्कोणास्त्रिकोणवपुषो दीर्घाश्च ते विपुंस्त्वाः नपुंसका इत्यर्थः । तेषां धारणे नियममाह—स्त्रीपुन्नपुंसकैर्युवतिपुंषण्ढाभिधानाः क्रमाद्धार्याः । स्त्रियः स्त्रीजातिभिर्धार्याः, अन्यथाऽनर्थः । उत्तमस्य पवेः संधारणादिभिर्धर्मार्थौ भवत इत्याह—निःसंदेहमित्यादि । पुमान्वज्रस्य धारणेन यज्ञकृतेर्दानस्य कृतेर्यत्फलं प्राप्नोति तद्भवतीत्यन्वयः । अतः

१ 'यद्वेदाध्ययनात्' इति पा० ।

वरतनोरिति विशेषणं वज्रस्य । चातुर्वर्ण्यपरिग्रहात् ब्रह्मक्षत्रियवैश्यशूद्राणां धारणात्, तत्तद्वर्णजनिकां भूतिं कथंकारं न उररीकरोति । तस्माच्चत्वारोऽपि हीरका धर्मार्थकामेप्सुभिः स्थापनीया इति तात्पर्यार्थः ॥ ९६ ॥ ९७ ॥—

गुणतः शूद्रवर्णोऽपि पविर्द्विजवर्णादधिक इत्याह—

शूद्रादप्यधमो द्विजो यदि गुणैर्हीनः पविर्ब्राह्मणा-
दप्युच्चैरयमर्घमर्हति पुनः शूद्रो गुणैर्गौरवात् ॥ ९८ ॥
आधिव्याधिसरीसृपानलरिपुव्याघ्रापमृत्युग्रहा-
स्तं नैवाभिभवन्ति यस्य सदने तिष्ठेत्पवित्रः पविः ॥

टी० शूद्रादिति । वक्ष्यमाणगुणगणैर्यदि युक्तः शूद्रवर्णस्तस्माद्ब्राह्मणवर्णो हीनो ज्ञेयः । मौल्यमप्यधिकमर्हति, 'मौल्यं पूजाविधावर्घः' इत्यमरः । यद्गृहे एतादृशः पविस्तिष्ठेत्तमाधिव्याध्यादयो नाभिभवन्ति; आधिर्मानसी पीडा, सरीसृपाः सर्पादयः, अनलो वह्निः, रिपुः शत्रुः, व्याघ्रो हिंस्रः, अपमृत्युरकालमृत्युः, ग्रहाः सूर्यादयः भूतादयो वा ॥ ९८ ॥—

दोषानुद्दिशति—

बिन्दुः काकपदं यवः किल मलो रेखेति नाम्नोदिता
दोषाः पञ्च पवेरथात्र कथितो बिन्दुः समो बिन्दुना ॥९९॥
कृष्णो रक्त इति क्रमेण स पुनर्द्वेधा मतो वर्तुला-
वृत्ताकारभिदा ग्रहीतुरफलः शस्तो न सर्वोऽपि सः ॥

टी० बिन्दुरित्यादि । बिन्दुर्जलबिन्दुरिव, काकपदं पुस्तकशोधार्थं यद्दीयते तद्वत्, यवः यवाकारो बिन्दुविशेषः, मलः बाह्य आभ्यन्तरो वा त्रासाख्यः, रेखा राजी रक्ता पीता वा । एते पञ्च दोषाः पवेर्ज्ञेयाः । बिन्दुं लक्षयति—अथात्रेति । बिन्दुर्द्वेधा कृष्णो रक्तः । सोऽपि द्विविधः वर्तुलोऽवर्तुलश्च । बिन्दुविशिष्टं निषेधयति—ग्रहीतुरित्यादि । ग्रहीतुः ग्राहकस्याफलः धनादिलाभस्याकर्ता; सर्वोऽपि सः शस्तो न॥९९॥

काकपदं लक्षयति—

ज्ञेयं काकपदं तु काकचरणाकारं परीक्षाकृता
वज्रे श्रीमति संस्थितं पुनरिदं धर्तुर्भवेन्मृत्युदम् ॥ १०० ॥

टी०—परीक्षाकृता पण्डितेन ज्ञेयम् । धर्तुर्मृत्युदमपि भवेत् ॥ १०० ॥

रक्तापीतसितासितच्छविभिदा ज्ञेयश्चतुर्धा यवा-
कारस्तत्र यवः सितः खलु पवेः पूज्योऽपरे निन्दिताः ॥

टी०—यवलक्षणमाह–रक्तेत्यादि । रक्तपीतसितकृष्णभेदाच्चतुर्धा । तत्र सितः पूज्यः, अपरे निषिद्धाः ।—

मलं लक्षयति ।

**धारायामथ कोणयोर्निगदितो मध्ये च लौहो मल-**
**स्त्रेधा सोऽप्यनलादिभीतिजननो धर्तुर्भवेन्निश्चितम् ॥१०१॥**

टी०—धारायामित्यादि ।—धारायां मलः, कोणे मलः, मध्ये मल इति त्रेधा लौहो मलो ज्ञेयः । तद्युक्तग्रहणे दोषमाह—सोऽपीति । तच्छब्देन मलविशिष्टो गृह्यते । तद्धारयितुरनलादिभिर्भीतिरवश्यं भवति, तस्मान्न धार्यो न ग्राह्यश्च ॥१०१॥

चतुर्धा रेखा विभजते—

**सव्यासव्यनिवासिनी तदपरा तत्र स्थिता छेदिनी**
**छिन्ना चोर्ध्वगतिर्मतेति विबुधै रेखाश्चतस्रः पवेः ।**

टी०—सव्या वामा, अपसव्या दक्षिणस्था, छेदवती या रेखा स्थिता, अपरा छिन्ना सती ऊर्ध्वगतिः या ऊर्ध्वं गता; एवं चतस्रो रेखा मताः । तथा च–एका सव्या रेखा, एका दक्षिणा रेखा, छेदिनी स्थिता एका, छेदिनी चोर्ध्वगता एका ॥—

तासां निन्दितत्वमनिन्द्यत्वं चाह—

**सव्या तत्र शुभाऽपराः पुनरमूर्दौर्भाग्यदा वर्तुले-**
**ऽप्यन्तर्भेदिनि लग्नकोणिनि पवौ दोषास्त्वकिंचित्कराः १०२**

टी०—सव्येति । तत्र सव्या या सा शुभा भवति । अपरास्तिस्रो दौर्भाग्यादिकारिण्यः । उक्तदोषाणामपवादमाह—वर्तुले इत्यादि । वर्तुले वर्तुलाकारे तस्याः स्वरूपे । दोषे लग्नकोणिनि संलग्नकोणे । एवंभूते वज्रे एते दोषाः सर्वेऽप्यकिंचित्करा निष्फला इत्यर्थः ॥ १०२ ॥

गुणानुद्दिशति ।—

**अच्छत्वं लघुता तथाऽष्टफलता षट्कोणता तीक्ष्णता-**
**ऽप्येतान्पञ्च गुणान् गृणन्ति गुणिनो देवोपभोग्ये पवौ १०३**

टी०—अच्छत्वमिति । उत्तमे पवौ आदर्शादिवदच्छत्वम् । लघुता तुषवत् । अष्टदलता अष्टफलकता । षट्कोणता षडस्रता । तीक्ष्णता अन्यमणिभेदकता । एते पञ्च गुणाः ॥ १०३ ॥

---

१ 'धाराकोणकमध्यसंस्थिततया त्रेधा मलो रत्नविद्याख्यातः स पुनर्ग्रहीतुरनलव्याघ्रादिभीतिप्रदः' इति पाठान्तरम् । २ 'तथाऽष्टदलता' इति पा० ।

उपसंहारव्याजेन खनिं निरूपयति ।—

**जातिः प्राक् निरूपिता जनिरपि प्रोक्ता खनिस्त्वष्टधा**
**द्वे द्वे तत्र युगे युगे प्रभवतस्तत्रादिमे कोशलः ।**
**कालिङ्गस्तदनन्तरे निगदितो वङ्गस्तथा मालवः**
**सौराष्ट्रो मणिपुण्ड्रकः कलियुगे सोपारवज्राकरौ ॥ १०४ ॥**

**टी०**—जातिः ब्राह्मणत्वादिजातिः । जनिः दैत्यदेहोत्पन्नत्वादिः । खनिः आकरः । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । सा चाष्टधा । तत्र युगपुरस्कारेण द्वे द्वे भवतः । तत्रादिमे कृतयुगे कोशलः कोशलदेशः कालिङ्गदेशश्च । त्रेतायुगे वङ्गदेशो मालवश्च । द्वापरयुगे सौराष्ट्रदेशो मणिपुण्ड्रकपर्वतश्च । कलियुगे तु सोपारदेशो वज्राकरः वैरागरश्च । एवं खनीर्ज्ञात्वा मौल्यमादिशेदिति भावः ॥ १०४ ॥

तत्र मौल्यज्ञानार्थं मानपरिभाषामाह—

**चत्वारः सितसर्षपा पनसिका[1] ते द्वे पुनस्तण्डुल-**
**स्ताभ्यामेव यवो यवः पुनरयं पिण्डो(ण्डे)ऽस्ति किंचित्पृथुः ।**

**टी०**—चत्वार इति । सितसर्षपाश्चत्वारः सिद्धार्थकास्तैर्पनसिका, ताभ्यां तण्डुलः, तण्डुलाभ्यामेव यवः । प्रकृते योजयति—यवः पुनरिति । पिण्डशब्दः स्थौल्यवाचकः, अयं वंशयववत्स्थूलः अधिको वा किंचित् । तोलनिकातुलायां संतोल्य मौल्यमादिशेत् ॥—

व्यवहारार्थं संज्ञामाह ।—

**पिण्डो गात्रमिति द्विधा पविवपुः संज्ञाऽस्य संज्ञामिमां**
**ज्ञात्वा मानक[2]दण्डतो बत महन्मध्याल्पमौल्यं वदेत् ॥ १०५ ॥**

**टी०**—पिण्डो गात्रमिति । तथा च यवाकारं पिण्डं मानं तु पनसिकातुल्यं चेत्तदा महन्मौल्यम् । यदा यवाकारः पिण्डे मानेऽपि यवपरिमितस्तदा मध्यं मौल्यम् । यदा यवमितः पिण्डे माने यवचतुष्टयस्तदा तु हीनमौल्यमादिशेत् । तत्रापि अच्छत्वादयो गुणाश्चेत्तदा महन्मौल्यम् । यदा तु दोषादिजुष्टता तदा हीनमौल्यमित्यादि सर्वं बुद्ध्या विचार्यम् ॥ १०५ ॥

**मौल्यं न प्रतिदेशमस्ति सदृशं येनेदमित्थं मया**
**वाच्यं तत्र तथापि गद्यत इह त्रैराशिकं क्रान्तये ।**

---

१ 'मनसिका' इति पा० । २ 'मानमिदं च तोलनिकया संतोल्य मौल्यं वदेत्' इति पा० ।

टी० त्रैराशिको ज्योतिःशास्त्रीयो व्यवहारस्तेनादेशः ॥—

पिण्डेऽपि भेदत्रितयमाह—

पिण्डस्तु त्रिविधो लघुः समगुरुस्तत्रोत्तमं लाघवे
साम्ये मध्यममल्पमेव गदितं मौल्यं गुरुत्वे बुधैः ॥१०६॥
त्रेधा लाघवतस्त्रिधा गुरुतया षोढा च सामान्यतो
मूल्यं द्वादशधेदृशं खलु मतं तत्तारतम्यं क्रमात् ॥
पिण्डस्तण्डुलसंमितो यवपृथुः संभा[1]व्य चित्ते पुन-
र्वज्रं तेन समं विचार्य चतुरो मौल्यं ततो निर्दिशेत् ॥१०७॥
तच्चेत्तत्क्रमतन्निवृत्तिकगुणैर्युक्तश्चतुर्भिः पवि-
र्निष्कं तण्डुलसंमितो यवपृथुः आप्नोति मौल्यं यदि ॥
पिण्डो यस्य यवद्वयेन सदृशो माने पुनस्तण्डुलो
मौल्यं तस्य पवेश्चतुर्गुणमुदाहर्तव्यमेवं पुनः ॥ १०८ ॥
पिण्डश्चेत्त्रिचतुःशरर्तुयवभः स्यादष्टदिक्छोडश-
द्विर्द्विर्वर्धितमस्य तण्डुलमितेर्वज्रस्य मौल्यं तथा ॥
यद्वद्वृत्वे तु यवोपमः प्रकृतितस्तत्पादतो मानवा-
नष्टाविंशतिवर्धितं प्रथमतः प्राप्नोति मौल्यं मणिः ॥१०९॥
पिण्डे सप्तयवोपमः परिमितौ स्यात्तण्डुलैकक्रमो
वज्रो वारितरो लभेत परमं मौल्यं सहस्रद्वयम् ।
स्याच्चेत्साङ्घ्रियवोपमः पविरथो माने गुरुस्तण्डुलः
क्षीयेतास्य मणेरथ द्विगुणितं मौल्यं क्षयेऽयं क्रमः ॥११०॥
इत्थं युक्तिबलाद्विचार्य चतुरो मौल्यं मणेरादिशे-
दर्घस्यासति वज्रवर्ष्मणि यथादोषं क्षयं कल्पयेत् ।
यावत्स्याद्गुणिनस्ततस्त्वगुणिनो वृद्धेश्चतस्रः कला-
श्छेत्तव्या कुशलेन देशसमयद्रव्यात्मविज्ञानिना ॥ १११ ॥

---

१ 'संभावयित्वा' इति पाठान्तरम् ।

टी०—पिण्डस्त्विति। पिण्डः स्वरूपं, तत् चेल्लघु तदा उत्तमं, समं चेन्मध्यमं, गुरु चेन्मौल्यमल्पमेव। तथा तरतमादिभेदेन त्रेधा लाघवं, त्रेधा गौरवं, षोढा समं, एवं द्वादशधा मौल्यं सामान्यतो ज्ञेयम्। तदेवोदाहरणत्वेन योजयति-पिण्डस्तण्डुलसंमित इत्यादि। तण्डुलेन मितः यववत्स्थूलः, तत्राप्यच्छत्वादिगुणसंपन्नः, एवं क्रमं ज्ञात्वा निष्कं सुवर्णमौल्यमादिशेत्। त्रैराशिकं प्रतिपादयति—पिण्डो यस्येति यस्य यवद्वयतुल्यः पिण्डस्तण्डुलपरिमित एव चेत्तदा चतुर्निष्का आदेशनीयाः। पिण्डश्चेदित्यादि। पिण्डश्चेत्त्रिचतुःपञ्चयवतुल्यस्तण्डुलमितः तदाऽष्टौ निष्काः षोडश निष्काः, एवं द्विर्द्विर्वर्धितं द्वात्रिंशच्चतुःषष्टिरित्यादिक्रमेण वर्धितमादिशेत् यद्बुद्धत्वे तु यवोपमः पुनस्तत्पादतो मानवान्पादेन तण्डुलमितस्तदा अष्टाविंशतिभिर्विवर्धितं मौल्यं मणिः प्राप्नोति। यदा पिण्डे सप्तयवोपमस्तण्डुलमितो वज्रो वारितरत्वादिगुणसंपन्नो निर्दोषश्चेत्तदा सहस्रद्वयं मौल्यं प्राप्नोति। इदानीं हीनतायां मौल्यमाह—स्याच्चेदिति। सपादयवस्तत्तुल्यतायां गुरुतायां सपादतण्डुलस्तदाऽस्य मणेः मौल्यं क्षीयेत। एवं सपादयवपरिमितस्तण्डुलद्वयपरिमितश्चेत्तदा इतोऽपि मौल्यं हीनमादिशेत्। इति क्षये क्रमो ज्ञातव्यः। उपसंहारव्याजेनाह—इत्थं युक्तिबलादिति। चतुरः क्रयक्रियाविचारे कुशलः, वज्रवर्ष्मणि वज्रदेहे, अर्घस्य मौल्यस्य, क्षयं कल्पयेत्। असति दोषे वृद्धिः, सति दोषे क्षयः। तथा गुणिनो यावन्मौल्यं स्यात्, ततः अगुणिनः वृद्धेश्चतस्रः कलाश्छेत्तव्याः। तत्र देशकालद्रव्यात्मसु यदा कुशलं स्यात्तदा गुणः, अन्यथा दोष इति॥ १०६ ॥ १११ ॥

तत्र मौल्यप्रयोक्तुर्गुणानाह—

**कर्मज्ञो लघुपाणिरर्थविमुखः शास्त्रप्रवीणो गुणी**
**निःसंदिग्धमतिर्विदेशविधिविन्मौल्यप्रयोक्ता भवेत्।**

टी० कर्मज्ञ इति मौल्यं कर्तुं जानाति। लघुपाणिर्येन गृहीत्वा दत्तं गुणाय भवति सः। अर्थविमुखो मध्ये कापट्यं कृत्वा न स्थितः। गुणी ऊहापोहविचारचतुरः। निःसंदिग्धमतिरनेकरत्नग्रहणजातमतिः। विदेशविधिवित् देशान्तरस्थभाषामौल्यादिज्ञः। एवं प्रयोक्ता रत्नविक्रेता भवेत्।—

तत्राज्ञानिनो मौल्यप्रयोगदोषमाह—

**अज्ञानादविचार्य मौल्यमधमः कुर्यान्मणेः कुत्सितं**
**कुष्ठी सोऽत्र भवेदमुत्र स पुनर्गच्छेन्महारौरवम्॥ ११२॥**

टी० एवं अज्ञानादिति। अमुत्र परलोके, महारौरवं नरकम्॥ ११२॥

मुद्रादौ पविन्यासप्रकारमाह—

**यत्स्यादङ्गममुष्य निम्नमुदितं सद्भिः शिरस्तत्पवे-**
**र्विस्तीर्णं तु तलं ततः स शिरसा योज्योऽङ्गुलीयादिषु।**

टी०—यत्स्यादिति। अमुष्य हीरकस्य निम्नमङ्गं गभीरं सद्भिस्तच्छिर उदितं, विस्तीर्णं तु तलमुदितम्। अङ्गुल्यादिषु मुद्रिकादिषु शिर एव योज्यम्।—

परीक्षाकरणप्रकारमाह—

वामं वामविलोचनः करतलं विस्तार्य तस्मिन्पविं
तर्जन्या परिचालयेदवहितः प्रायस्तलेन स्थितः॥ ११३॥

टी०—अवहितः पण्डितः, वामं करतलं विस्तार्य, तस्मित् पविं तर्जन्या परिचालयेत् ;कीदृशः? वामविलोचनः वक्रदृष्टिः सन्नेव। तलेन निम्नत्वेन स्थितः॥११३॥

किं विचारणीयं तदाह—

जातिर्दोषगुणौ खनिर्गिरिकथे रङ्गोपरङ्गौ छवि-
मौल्यं चेति दशप्रकारमशनेर्जानाति यो लक्षणम्।
बाह्याभ्यन्तरतः प्रविष्ट इव स स्याच्छाश्वतो मण्डली
तेषां संसदमाहुराचार्यविबुधः श्रीमण्डलीं मण्डली॥११४॥

टी०—गिरिः पर्वतः। कथेतिहासः। रङ्गः शुक्लादिः। उपरङ्गो नीलादिमिश्रः। छविः कान्तिः। मौल्यं देशदेशीयम्। इति दशप्रकारं पवेर्लक्षणं यो जानाति स मण्डलीं प्रविशेत्। क इव? बाह्याभ्यन्तरतः प्रविष्ट इव। कस्मात्? शाश्वतः। मण्डलीसंज्ञाया अर्थमाह—तेषामिति। मण्डलिकानां रत्नविदां सभां मण्डलीमाहुः॥ ११४॥

तस्यामगुणवान्न प्रविशेदित्याह—

हीनाङ्गः प्रविशेन्न तां न पतितो नो वाऽन्त्यजो नाबला
भाण्डाद्यैरिह मौल्यमल्पमधिकं प्रोक्तं न दोषाय तत्।
व्युत्क्रम्योत्तममध्यमाधमविपर्यासेन यद्यत्तथा
स्नेहाल्लुब्धतया तु संसदि पुनः कुष्ठी भवेन्मण्डली॥११५॥

टी०—हीनाङ्गः नासादिरहितः। पतितः जातिभ्रष्टः। अन्त्यजश्चाण्डालादिः। अबला स्त्री। इह भाण्डाद्यैर्मध्यमं मौल्यं प्रोक्तं दोषाय न भवति; उत्तमाधममध्यममणेर्विपर्यासे द्रव्यलोभेन संसत्प्रविष्टः कुष्ठी भवेत्॥ ११५॥

एकेन मौल्यविचारणा न कार्येत्याह—

नैको मौल्यविचारणां विरचयेन्नैकः परीक्षेत वा
भ्रान्तेः पौरुषधर्मतस्तु कृतके मुह्यन्ति सुज्ञा मणौ।
शाणक्षारविलेखनेन विलिखेत्संदेहमन्ये पुन-
र्लिख्यन्ते कुलिशेन हन्त कुलिशं केनापि नो लिख्यते ११६

टी०—भ्रमप्रमादीनां पुरुषधर्माणां सत्त्वात्संदेहे शाणक्षारविलेखनेन परीक्षेत। अन्ये मणयः कुलिशेन लिख्यन्ते, कुलिशं तु केनापि न लिख्यते। इति रसपद्धत्यां वज्रनिरूपणम् ॥ ११६ ॥

अथ मौक्तिकम्—

स्वच्छं ह्लादि लघूदकद्युतियुतं मुक्ताफलं किंचन
स्थूलं स्निग्धमतीव निर्मलमिलासूनुप्रकाशं सदा ।
आम्नायोदितमस्य मौल्यमवनौ तालद्वयीजघ्नको
राशिर्हेमकृतः कृतस्तदधमं वा मध्यमं जायते ॥ ११७ ॥
दोषान्पञ्च लघून् गुरूंश्च चतुरः षट् चैव दोषेतरान्
छायास्त्रित्वमिता गृणन्ति सुधियो मुक्तामणौ ते पुनः ।
दीर्घं पार्श्वकृशं त्रिवृत्तमपि[1] च त्र्यस्रं ततश्चाविलं[2]
पञ्चैते खलु मौक्तिकेषु गदिता दोषास्तु साधारणाः ॥११८॥
नाम्नैवोदितलक्षणाः पुनरमी विच्छिन्नरुग्योगिता-
दौर्भाग्यप्रसुताविनाशलघुताकौलीनताकारिणः ॥
शुक्तिस्पर्शनमत्स्यनेत्रजठराकारातिरक्ताङ्कताः
श्वित्रक्रोशदरिद्रतामृतिकरा दोषा बृहन्तस्त्वमी ॥ ११९ ॥
तेष्वन्त्यौ विशदौ स्वशुक्तिसदृशस्त्वाद्यो द्वितीयस्ततो
मत्स्याक्षच्छविलाञ्छनः पुनरमी शस्ता न मुक्ताफले
दीप्तिर्गौरववृत्तताविमलतासुस्निग्धताकान्तताः
स्युः षट् शुक्तिमणौ गुणा इति गुणैर्युक्तं पुनर्मौक्तिकम्॥१२०॥
यः कण्ठे बिभृयात्स सप्तजनुषामंहःसमाप्तिं नये-
च्छायास्तु त्रिविधाः स्मृता मधुसिताश्रीखण्डखण्डश्रियः ।
वृत्तस्थूलगुरूरुरुक्छुचि शुभं नीवीं तु यत्प्राप्नुया-
त्सत्यं त्वत्र तुलामुशन्ति कवयो जातिस्पृशं मौक्तिकम्॥१२१॥
गुञ्जाद्वित्रियवाद्ववेदिह पुनर्माषश्चतुर्भिश्च तैः
शाणः शाणयुगात्कलञ्ज उदगान्निष्कस्तदेकादशात् ।

१ 'त्रिवृद्धमपि' इति पा० । २ 'ततः कापिलं' इति पा० ।

टी०—रसरत्नसमुच्चये तु 'अष्टास्रं चाष्टफलकं षट्कोणमतिभासुरम्। अम्बुदेन्द्रधनुर्वारितरं पुंवज्रमुच्यते ॥ स्त्रीपुंनपुंसकं वज्रं योज्यं स्त्रीपुंनपुंसके ॥ आयुःप्रदं झटिति सद्गुणदं च वृष्यं दोषत्रयप्रशमनं सकलामयघ्नम्। सूतेन्द्रबन्धवधसद्गुणकात्दृर्यदायि मृत्युञ्जयं तदमृतोपममेव वज्रम् ॥ एकयामावधिः स्विन्नः कुलित्थक्वाथके पविः। विलिप्तं मत्कुणस्यास्रैः सप्तवारं विशोषितम् ॥ कासमर्दरसापूर्णे लोहपात्रे निवेशितम्। सप्तवारं परिध्मातं वज्रं भस्म भवेत्खलु ॥ पक्वबिम्बीफलच्छायं वृत्तायतमवक्रकम्। स्निग्धमव्रणकं स्थूलं प्रवालं सप्तधा शुभम् ॥ क्षयपित्तास्रकासघ्नं दीपनं पाचनं लघु। विषभूतादिशमनं विद्रुमं नेत्ररोगनुत् ॥ ह्लादि श्वेतं लघु स्निग्धं रश्मिवन्निर्मलं महत्। ख्यातं तोयप्रभं वृत्तं मौक्तिकं नवधा शुभम् ॥ कफपित्तक्षयध्वंसि कासश्वासाग्निमान्द्यजित्। पुष्टिदं वृष्यमायुष्यं दाहघ्नं मौक्तिकं मतम् ॥ कुशेशयदलच्छायं स्वच्छं स्निग्धं मृदु स्फुटम्। वृत्तायतं समं गात्रं माणिक्यं श्रेष्ठमुच्यते ॥ माणिक्यं दीपनं वृष्यं कफवातक्षयार्तिनुत्। भूतवेतालपापघ्नं कर्मजव्याधिनाशनम् ॥ हरिद्वर्णं गुरु स्निग्धं स्फुरद्रश्मिचयं शुभम्। मसृणं भासुरं तार्क्ष्यं गात्रं सप्तगुणं मतम् ॥ ज्वरच्छर्दिविषश्वाससन्निपाताग्निमान्द्यनुत्। दुर्नामपाण्डुशोफघ्नं तार्क्ष्यमोजोविवर्धनम् ॥ वैदूर्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम्। भ्रमच्छुभ्रोत्तरीयेण गर्भितं शुभमीरितम् ॥ गोमेदःसमरागत्वाद्गोमेदं रत्नमुच्यते। सुस्वच्छगोजलच्छायं स्वच्छं स्निग्धं समं गुरु ॥ निर्दलं मसृणं दीप्तं गोमेदं शुभमष्टधा। गोमेदं कफपित्तघ्नं क्षयपाण्डुक्षयङ्करम् ॥ दीपनं पाचनं रुच्यं त्वच्यं बुद्धिप्रबोधनम्। एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम् ॥ मृदु मध्ये लसज्ज्योतिः सप्तधा नीलमुत्तमम्। श्वासकासहरं वृष्यं त्रिदोषघ्नं सुदीपनम् ॥ विषमज्वरदुर्नामपापघ्नं नीलमीरितम्। पुष्परागं गुरु स्वच्छं स्निग्धं स्थूलं समं मृदु ॥ कर्णिकारप्रसूनाभं मसृणं शुभमष्टधा। निष्प्रभं कर्कशं रूक्षं पीतश्यामं नतोन्नतम् ॥ कपिशं कपिलं पाण्डु पुष्परागं परित्यजेत्। पुष्परागं विषच्छर्दिकफवाताग्निमान्द्यजित् ॥ दाहकुष्ठप्रशमनं दीपनं पाचनं लघु ॥ १२१ ॥—

अथ मौक्तिकं,

**अष्टौ मौक्तिकभूमयः करिकिरित्वक्सारमत्स्याम्बुमुक्कम्बूरोगतिशुक्तयोऽत्र चरमोत्पन्नं पुनर्विश्रुतम् ॥ १२२ ॥**

कामचारान्मौक्तिकजातीराह—

**यन्मेघोदरसंभवं तदवनीमप्राप्तमेवामरै-**
**र्व्योमस्थैरपनीयते विनिपतद्वर्षासु मुक्ताफलम् ।**
**तिग्मांशोरपि दुर्निरीक्ष्यमकृशं सौदामिनीसन्निभं**
**देवानामपि दुर्लभं न मनुजाः स्युस्तस्य पात्रं पुनः ॥१२३॥**

टी०—किरिः सूकरः । त्वक्सारो वंशः । अम्बुमुक् मेघः । कम्बुः क्षुद्र-शङ्खः । उरोगतिः सर्पः ॥ १२२ ॥ १२३ ॥

करिमौक्तिकलक्षणमाह—

यद्दन्तावलकुम्भसंभवमदः पीतारुणं मन्दरुक्
धात्रीदभ्रमथान्यरत्नमधमं काम्बोजकुम्भीन्द्रजम् ।

मत्स्यस्याह—

प्रोष्ठीगर्भभवः सुमौक्तिकमणिर्गुञ्जासमः पाटली-
पुष्पाभः स न लभ्यते भुवि जनैरस्मिन्कलौ पापिनि ॥१२४॥

सर्पमौक्तिकमाह—

शेषस्यान्वयिनां फणासु फणिनां यन्मौक्तिकं जायते
वृत्तं निर्मलमुज्ज्वलं शशिरुचि श्यामच्छवि श्रीकरम् ।
कङ्कोलाकृति कोटिकोटिसुकृतैः प्राप्नोति चेन्मानवः
स स्याद्वाजिगजाधिपो नृपसमो जातोऽपि नीचे कुले ॥१२५॥
आस्ते सद्मनि चेत्स पन्नगमणिस्तं यातुधानामरा
हर्तुं रन्ध्रमवेक्षते तदितरः कुर्यान्महाशान्तिकम् ।

वंशजलक्षणमाह—

मुक्ताः सन्ति कुलाचलेषु करकाकान्तिद्रुहो वंशजाः
कर्कन्धूफलबन्धवो निदधते कण्ठेषु सिद्धाङ्गनाः ॥ १२६ ॥

कम्बुमुक्ताफलस्य लक्षणमाह—

शङ्खस्य श्रुतिहारिणो जलनिधौ ये वंशजाः कम्बव-
स्तेष्वन्तः किल मौक्तिकं भवति यत्तच्छुक्रतारानिभम् ।
कापोताण्डसमं सुवृत्तमकृशश्रीकं सुरूपं लघु
स्निग्धं स्पर्शपवित्रमत्र न पुनर्मर्त्यैस्तदासाद्यते ॥ १२७ ॥

वाराहमाह—

एकाकी शिशुरेव निःस्पृहतया यः काननं गाहते
तस्यानादिवराहवंशजनुषः कोलस्य मूर्ध्नि स्थितम् ।

कङ्कोलाकृतिमिन्दुकुन्दधवलं दैवादवाप्नोति चे-
न्मुक्तां यः समुपास्यते स निधिभिर्मर्त्यो धनाधीशवत् ॥१२८॥

शुक्तिजलक्षणमाह—

वज्राघातविघट्टिताद्बलमुखाद्भ्रष्टाः पुनर्ये द्विजाः
क्षारोदन्वति यत्र यत्र पतितास्ते ते भवन्नाकराः ।
आदायः पृथुबर्बरो जलनिधौ स्यादारलाटस्ततो
नाम्ना सिंहलकोर्मिजौ तदुपरि स्यात्पारसीकोऽपरः ॥१२९॥
अत्रोदन्वति शुक्तिजीवजठरक्रोडैककोणस्थिताः
स्वातीशम्बरबिन्दवः परिणमन्त्यक्लिन्नमुक्तातया ।
सुस्निग्धं मधुवर्णमुत्तमरुचि स्यात्सिंहले मौक्तिकं
स्निग्धं पीतरुगिन्दुबिम्बरुचिरं स्यादारलाटोद्भवम् ॥१३०॥
स्वच्छं[1] स्निग्धमतीव बन्धुरतरं स्यात्पारसीकोद्भवं
रूक्षं किंचन वर्णसंकरयुतं स्याद्बार्बरं मौक्तिकम् ।
शोणं तूर्मिजसंभवं विदुरतिस्निग्धं तथाऽऽदायजं
चातुर्वर्ण्यहितं[2] सुलक्षणमतिश्लक्ष्णं कविश्रीधरम् ॥ १३१ ॥
षट्स्वेतेष्वपि रुक्मिणीव जगति ख्यातिं गता रुक्मिणी-
नाम्ना शुक्तिरनीदृगुत्तमगुणा सिन्धौ समुज्जृम्भते ।
तस्या गर्भभवं तु कुङ्कुमनिभं सर्वासु जातिष्वपि
श्रेष्ठं भूरिगुणं वदन्ति कृतिनः श्रेयस्करं तद्भवेत् ॥ १३२ ॥

**टी०**—रसरत्नसमुच्चये शोधनादिप्रकारस्तु—“ शुद्ध्यत्यम्लेन माणिक्यं जयन्त्या मौक्तिकं तथा । विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धकैस्तथा ॥ पुष्परागं च संधानैः कुलित्थक्वाथसंयुतैः । तण्डुलीयजले वज्रं नीलं नीलीरसेन च ॥ रोचनाभिश्च गोमेदं वैदूर्यं त्रिफलाजलैः । लकुचद्रावसंपिष्टैः शिलागन्धकतालकैः ॥ वज्रं विनाऽन्यरत्नानि म्रियन्तेऽष्टपुटैः खलु । पुष्परागं महानीलं पद्मरागं प्रवालकम् ॥ मणयोऽन्येऽपि विज्ञेयाः सूतबन्धस्य कारकाः । वैक्रान्तः सूर्यकान्तश्च हीरकं मौक्तिकं मणिः ॥

---

१ ‘ श्वेतं ’ इति पा० । २ ‘ युतं ’ इति पा० ।

चन्द्रकान्तस्तथाऽत्रैव राजावर्तश्च सप्तमः । गरुडोद्गारकश्चैव ज्ञातव्या मणयो ह्यमी ”
इति रत्नभस्मादिनिरूपणम् ।

अथ विषलक्षणम् । रसरत्नसमुच्चये–“घनं रूक्षं च कठिनं भिन्नाञ्जनसमप्रभम् । कन्दाकारं समाख्यातं कालकूटं महाविषम् ॥ मयूराभं मयूराख्यं, बिन्दुमद्बिन्दुकं स्मृतम् । चित्रमुत्पलकन्दाभं सक्तुकं सक्तुवद्भवेत् ॥ वालुकं वालुकाकारं, वत्सनाभं तु पाण्डुरम् । शङ्खवर्णं शङ्खकं स्याच्छुभ्रवर्णं सुमङ्गलम् ॥ घनं रूक्षं च निबिडं शृङ्गाकारं च शृङ्गकम् । मर्कटं कपिवर्णाभं, कर्दमं कर्दमप्रभम् ॥ मुस्तकं मुस्तकाकारं, सितं पीतं च कर्दमम् । पुष्करं पुष्कराकारं, शिखी शिखिशिखाप्रभम् । हारिद्रकं हरिद्राभं, हरितं हरितं स्मृतम् । चक्राकारं भवेच्चक्रं, नीलवर्णं हलाहलम् ॥ श्वेतं रसे रक्तबिम्बं भक्षणे व्याधिनाशनम् । पीतं विषं तथा कृष्णं संदष्टे विषमुच्यते ” इति विषलक्षणम् ॥ १२९–१३२ ॥

तीक्ष्णैरम्लविदाहिकोष्णलवणैः क्रोधैश्च संदूषितं
पित्तं रक्तमुदीरयेदिह बुधैस्तद्रक्तपित्तं स्मृतम् ।
ऊर्ध्वाधो वदनाद्गुदाच्च मिलितं निर्याति यच्छ्लेष्मणा
संसृष्टं मरुताऽपि चन्द्रकयुतं कृष्णं न साध्यं वदेत् ॥१३३॥

ऊर्ध्वं यद्बलिनो नवं न कलुषं दोषैकसंश्लेषितं
निर्वेगं खलु रक्तपित्तमणुशो नोपद्रुतं साधयेत् ।
काले चोर्ध्वगतं विरेकशमनैस्तिक्तैः कषायैः पुन-
र्याप्यं दोषयुगेन मिश्रितमधोभागेन यत्संवहेत् ॥ १३४ ॥

तस्मिन्वान्तिशमौ तु मृष्टमधुरं सर्वं हितं तर्पणं
पेयाद्यं शुभलाजमिक्षुजरसं सर्वत्र संसर्जनम् ।
ज्ञात्वा कालबलाबलं त्वनुबलं दोषस्य दूष्यस्य च
क्षैण्यं सर्वविकारशातनविधौ ज्ञेयं सुधीभिः पुनः ॥ १३५ ॥

दद्यादत्र वसन्तराजयुगलं पञ्चामृतां पर्पटीं
गन्धस्यापि रसायनं मधुसितायुक्तं वसन्ताभिधम् ।
वासाकल्ककषायपाकगुटिकासर्पिः कणामोदकं
लावैणादिरसांश्च शीतमधुरान्मन्थान्भिषक् पाययेत् ॥१३६॥

यत्किञ्चिच्च विरोधि तक्रमतसीतैलप्रपक्कं सुरां
शाकं जागरणं व्यवायकटुकं तीक्ष्णं भृशं वर्जयेत् ।

इति रक्तपित्तचिकित्सा ।

अथ श्वासकासचिकित्सा ।

कासान्पञ्च समीरपित्तकफजान् द्वौ तु क्षयोरःक्षता-
त्तेषां स्वस्वनिदानतश्च निखिलां साध्यामसाध्याकृतिम् १३७
कुर्यात्कर्म तु शोधनादि बलिनः स्मृत्वा च पूर्वक्रमं
धूमं नावनमञ्जनक्रमयुतं गण्डूषसंस्वेदनम् ।
भार्ङ्गीकण्टकिवासकोषणकणाशुण्ठ्यादिलेहांस्तथा
श्वासे, हिक्किषु तैलमात्रमधिकं कासघ्नमन्यत्पुनः ॥ १३८ ॥
क्षौद्रं सर्पिरिहेष्यते मृदुतरं संशोधनं पूर्ववत्
साध्यासाध्यविभाजनं तु चरकाज्ज्ञात्वा निदानादपि ।
ताम्रं ताम्रजपर्पटीं मधुकणाश्रेष्ठायुतां सर्वदा
ज्ञात्वा दोषबलाबलं विमलहृक्पथ्यं ददीतोचितम् ॥१३९॥

इति कासश्वासहिक्काचिकित्सा ।

वान्तिः शोणितपूयतुल्यकफजा शैत्यं ज्वरः सर्वदा
कासः पीनसवह्निमान्द्यकृशता ध्वंसः स्वरस्यापि च ।
ज्ञेयं यक्ष्मगदस्य चिह्नममलं, सत्त्वं बलं धातुजं
ज्ञात्वा संविदधीत भेषजविधिं साध्ये त्वसाध्ये न तु १४०
दोषाढ्यस्य बलान्वितस्य वमनं शक्तस्य युक्तं पुनः
स्नेहस्वेदविधिं विधाय मधुरैः स्निग्धैर्यवाग्वादिभिः ।
दद्याद्वान्तमनन्तरं सुसितया शम्याकवर्गेण वा
क्वाथेन त्रिवृतायुतेन मधुना सर्पिर्युतेनापि च ॥ १४१ ॥
ज्ञात्वा कोष्ठविशुद्धितामनु रसं यूषं च दद्यात्ततः
शाल्यन्नं लघु मुद्गषष्टिकयवान् गोधूमपूपान् लघून् ।

आजं क्षीरघृतं च मांसरुधिरं लावैणताम्रान् शशान्
यूषान्मांसरसांश्च शाकनिचयान् युञ्ज्यात्सुहृद्यान् क्रमात् १४२
प्रातर्दन्तविशुद्धये कटुरसान् शृङ्ग्यादिकान्कट्फल-
क्काथान् कण्ठविशुद्धयेऽथ बलिनो भाङ्ग्र्यादिकान् सज्वरे ।
पश्चाद्धूमविधिं च नस्यकवलं लाक्षादिनारायणैः
सारण्यादिबलावरीमलयजैरभ्यक्तदेहः सुखैः ॥ १४३ ॥
स्नात्वा क्काथजलैस्ततो मृगमदैः कर्पूरकाश्मीरकै-
र्भद्रश्रीभिरनुद्धतोऽगुरुभवैर्लिप्तश्च संधूपितः ।
माल्यं रत्नमहौषधीगणचयं मन्त्रं च यन्त्रं क्रमा-
द्धार्यं बाहुशिरःसु सूर्यविनतः स्तोत्रैश्च मन्त्रैः शुचिः ॥१४४॥
तीर्थे ब्राह्मणवृन्दवन्दितरविश्चीर्णव्रतः शास्त्रतो
गोदानं महिषस्य दानमथवा लोहस्य ताम्रस्य वा ।
रम्भां स्वर्णविनिर्मितां सुवसनैराच्छादितां दक्षिणा-
युक्तां श्रोत्रियदीनबन्धुविदुषे विप्राय दद्यात्स गाम् ॥१४५॥
एवं पूर्वविधिं विधाय बहुशो वैद्यान् समाहूय वै
श्रेष्ठान् राजमृगाङ्कसेवनसमारम्भं प्रकुर्याद्गदी ।
यद्वा वज्रमृगाङ्कमौक्तिकलघूंल्लोकेशसर्वेश्वरान्
सेवेतानुदिनं यथोक्तविधिना प्राशान्पुनश्च्यावनान् ॥१४६॥
आगस्त्यांश्च पितामहेन गदितान्वासिष्ठपथ्यादिकान्
कासे पिप्पलिवर्धमानमसृजि क्षीणे च कूष्माण्डकान् ।

इति राजयक्ष्मादिचिकित्सा ।

कृच्छ्रे मेहयुते शिलाजतुरसं लक्ष्मीविलासद्वयं
मेहध्वान्तगजेन्द्रकेसरिरसं शुक्रक्षये गोलकम् ॥ १४७ ॥
पञ्चेषुं मदनाभिधं, त्वतिसृतौ शङ्खोदरं पोटलीं,
पाण्डौ लोहरसायनं, ग्रहणिकारोगेषु चिन्तामणिम् ।

गुल्मे शूलगदे त्वगस्त्यवटिकामग्नेः कुमारं तथा,
शूलादौ जठरेषु शङ्खवटिकां शङ्खद्रवान्रेचकान् ॥ १४८ ॥
कुष्ठे श्वित्रगदे च तालकरसान्, वातामये तालकं
सिन्दूरं रसपूर्वकं च विमलं कर्पूरसंज्ञं रसम् ।
पुंदोषे च फिरङ्गवातजनितस्फोटे च सन्ध्यस्थिगे
वाते गन्धकविद्रुतिं रसयुतां यष्टिं फिरङ्गाभिधे ।
कर्पूरं रसपूर्वकं त्वथ वटीं क्षाराभिधां धूपनं
हिङ्गूलोत्थरसेन्द्रतालकभवं वेल्लन्तरुस्वेदनम् ॥ १४९ ॥

इति रसोपयोगिनीं सामग्रीं निरूप्य महारसाः निरूप्यन्ते । तत्र ज्वरस्य प्राधान्यान्नवज्वरे रसाः । तेषु स्वकुलप्रसिद्धां भैरवीं गुटिकामाह—

पाठापारदगन्धकामृतलतामाक्षीकतालानलैः
काश्मीरीविषतिन्दुलाङ्गलिजटायष्ट्याह्वबोलौषधैः ।
कर्कोट्याऽपि च मोघया बृहतिकानिर्गुण्डिकावारिणा
क्षुण्णैः सप्तदिनं विभाव्य विहिता कोलास्थिदघ्नी वटी ।
नाम्ना भैरविका जयेत्सविषमान् नूत्नज्वरान् स्वेदनात्॥१५०॥

टी०—पाठा वृकी, पारदः शुद्धोऽपक्वः पक्वो वा, गन्धकः शुद्धो गन्धः, गुडूचीकाण्डचूर्णं, स्वर्णमाक्षिकः शुद्धः पक्वः, अशुद्धोऽपक्वः पक्वो वा हरितालः, चित्रकमूलत्वक्, काश्मीरी अतिविषा, विषतिन्दुः काकतिन्दुः, लाङ्गलीजटा कलिकारिणीमूलं, यष्टी मधुयष्टी, बोलो जातिरसः स्त्रीणामुपयोगी औषधं, शुण्ठी, कर्कोट्या वन्ध्याकर्कोटिकाकन्देन; क्षुण्णैः सुचूर्णितैः, कण्टकारीनिर्गुण्डीरसैः, विभाव्य कृता संप्रदायात्सप्तवारं, 'वासितं भावितं' इत्यमरः । 'द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत् । तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ'—इति वचनाद्द्रवमानं ज्ञेयम् । गुटिकामानं तु कोलप्रमाणम् । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति दघ्नच् । फलनामनी आह—भैरविकेति । भैरवाख्या वटी । स्वेदं घर्मं कृत्वा, एकाहिकादीन्वातादिजान्, नूत्नान्नवज्वरान् हन्यादिति । इयं सर्वव्याधिषु उपयुज्यते प्रभावात् ॥ १५० ॥

चन्द्रवटिकामाह—

ख्याता तद्वदियं च चन्द्रवटिका तापीजतिक्तानलै-
र्भूनिम्बामृतवल्लितालकबलिश्रेष्ठाविषापारदैः ।

दन्तीबीजकलिङ्गलाङ्गलिजटोशीरौषधैर्निर्मिता

टी०—भैरवीवदियं चन्द्रवटिका ख्याता। माक्षिकं, कटुकी, चित्रकः, किरातः, गुडूची, हरितालः, बलिर्गन्धकः, श्रेष्ठा त्रिफला, अतिविषा, सूतः, जेपालाख्यं, इन्द्रयवः, हलिनीकन्दः, उशीरं, औषधं शुण्ठी, एभिः कृता वटी तीव्रज्वरादिघ्नी ॥

ज्वरहराख्यं रसमाह—

अंशाः षोडश भारशृङ्गभसितादष्टौ हलिन्यङ्घ्रितः ॥ १५१ ॥
चत्वारो गरलाच्च गन्धदृषदो द्वौ पारदादेकतो
ह्येकत्रिंशदमून् लवानिति चतुस्त्रिः शृङ्गवेराद्रसैः ।
एकीकृत्य विमर्दितो ज्वरहरो नाम्ना रसः सिध्यति
गुञ्जायुग्ममुष्य पूर्वपयसा पीत्वाऽतितीव्रज्वरात् ॥१५२॥
तैलस्निग्धतनुः कदुष्णसलिलस्नातो दिनान्मुच्यते
अद्यात्षष्टिकभक्तदुग्धजमसावुल्लाघ एवाचिरम् ।

टी०—विकटबहुविषाणमृगशृङ्गभस्मतः षोडश भागाः, लाङ्गल्याः अङ्घ्रि मूलं तस्याष्टौ भागाः, वत्सनाभाच्चत्वारो भागाः, गन्धदृषदो गन्धकाद्द्वौ भागौ, सूतादेको भागः, सार्वविभक्तिकस्तसिल्, एवं मिलित्वा एकत्रिंशद्भागानेकत्र कृत्वा; चतुस्त्रिः सप्तवारं, आर्द्रकरसैर्भावितः, ज्वरहरो नाम रसो भवति । अस्य वल्लं पूर्वपयसा आर्द्रकरसेन पीत्वा, अतितीव्रज्वरात्संततादिज्वरान्मुक्तो भवतीत्यन्वयः । तिलतैलाभ्यक्तः किंचिदुष्णजलस्नातः । पथ्यमाह—अद्यादित्यादि । ज्वरवेगनिवृत्तौ षष्टिकोदनं, दुग्धजं दधि, एतदुभयमद्यात् । तत्कालं गदनिवृत्तो भवति । 'उल्लाघो निर्गतो गदात्' इत्यमरः ॥ १५१ ॥ १५२ ॥

अष्टयामिकगुटिकामाह—

चाङ्गेरीरजसः षडीशरजनीसिन्धूद्भवेभ्यश्च ष-
डंशा द्वादशनिर्मिता इति गवां दध्ना विमर्द्यैकतः ॥१५३॥
बद्धा कोलशलाटुवत्रिदिवसादूर्ध्वं निपीतोष्णकै-
र्यामैरष्टभिरष्टयामिकवटी छिन्द्यान्नवीनज्वरम् ।

टी०—चाङ्गेरीरजस इति चुक्रिकाचूर्णात् षट् भागाः, 'चाङ्गेरी चुक्रिका दन्तशठाऽम्बष्ठाऽम्ललोणिका' इत्यमरः, ईशः पारदः, रजनी, सैन्धवं, एभ्यः प्रत्येकं द्वौ

द्वाविति षट्, एवंप्रकारेण कृतान् द्वादशभागान्, गोदध्ना एकत्र मर्दयित्वा, कोलं लघुबदरीफलमपक्कं, तद्वद्वटीं कृत्वा, ज्वरे दिनत्रयात्पञ्चदिनात्सप्तदिनादूर्ध्वमुष्णोदकेन पीता अष्टप्रहरैः नवज्वरं नाशयति । अत एवान्वर्थसंज्ञा अष्टयामिकवटीति ॥ १५३ ॥

आतङ्कान्तकाख्यं रसमाह—

**हिङ्गूलो रसगन्धकौ त्रिसदृशं तिक्तारजः सप्तधा**
**शेफालीसलिलैस्तथाऽऽर्द्रकरसैः संभाव्य संपादितः ॥१५४॥**
**पीतः शर्करया सहार्द्रकरसैर्वल्लप्रमाणो रसो**
**ह्यातङ्कान्तक एष सत्यवचसा नागार्जुनेनोदितः ।**
**पक्वापक्वमजीर्णजीर्णमथवा हन्त्याशु तीव्रं ज्वरम् ॥१५५॥**

टी०—दरदः पारदः गन्धकः एतत्त्रयं समभागं, कटुकीचूर्णं सप्तभागं, संख्यायाः प्रकारे णप्, एतच्चूर्णितं निर्गुण्डिकार्द्रकरसाभ्यां भावितः शर्करार्द्रकरसाभ्यां वल्लमितः पीतः, नागार्जुनेन आतङ्कान्तक उक्तः, आतङ्को ज्वरः 'यक्ष्मातङ्कगदाबाधाषष्ठाः पर्यायवाचकाः' इत्युक्तत्वात्, सत्यवचसा दृष्टफलेन, एवंभूतं ज्वरं हन्ति—सामं निरामं, अजीर्णजीर्णत्वं तु त्रयोदशदिनैकविंशतिदिनभेदेन, अन्यथा पुनरुक्तिः ॥ १५४ ॥ १५५ ॥

नवज्वरमुरारिरसमाह—

**एकः पारदतस्तथैव दरदाद्भागस्तथैको विषा-**
**द्द्वौ द्वौ गन्धकताम्रटङ्कणनभस्तिक्तावराभ्यः पृथक् ।**
**हृद्धात्रीनलिकाग्नितीक्ष्णरजतात्तद्वत्तथैकोनका-**
**नंशांस्त्रिंशदमून्द्विरर्कपयसा द्विर्भृङ्गराजाम्भसा ॥ १५६ ॥**
**द्विस्त्रिश्चित्रकवारिणा च दशधा दन्तीजबीजाम्भसा**
**त्रिः श्रेष्ठासलिलैर्विभाव्य विहितः कोलास्थिमात्रो रसः ।**
**पुन्नागैर्मरिचैः सचोरकगुडैर्लीढो नवीनज्वरान्**
**जीर्णाजीर्णनवान्नवज्वरमुरारिर्नामको नाशयेत् ॥ १५७ ॥**

टी०—पारदः एकभागः, हिङ्गुल एकभागः, विषस्तथा एको भागः, गन्धकः, ताम्रभस्म, टङ्कणक्षारो भृष्टः, अभ्रकभस्म, कटुकी, त्रिफला, एषां पृथक्प्रत्येकं द्वौ द्वौ भागौ, वीप्सा न्यूनाधिकवचननिरोधाय, मनोधात्री ह्यावली, नलिका

त्रिवृत्, चित्रकः, लोहभस्म, रजतभस्म, तद्द्वौ भागौ, एकोनत्रिंशदंशान् तद्विशिष्टद्रव्याणि चूर्णीकृत्य भावयेत्, प्रत्येकं द्विवारं अर्कदुग्धेन, मार्कवरसेनच; चित्रकरसेन तु द्विवारं त्रिवारं वा ऐच्छिको नियमः, अत्रत्यदन्तीबीजरसेन, न तु जेपालदन्त्याः, त्रिफलाक्काथेन त्रिवारं भावयित्वा कृतः, लघुबदरास्थितुल्यः, चोरकयवानिका 'चोरओवा' इति लोके, गुडो जीर्णः, सामनिरामज्वरान्नाशयति ॥ १५६ ॥ १५७ ॥

अथ ज्वरप्रोत्थितं रसमाह—

तुल्यांशं बलिसूततालममलं संमर्द्य शुष्कं दिनं
विट्पञ्चाङ्गुलजम्भभृङ्गहपुषादार्वीपलाण्डुद्रवैः ।
आर्द्रीकृत्य ततः सकृद्द्रविकरे दत्तं च कूप्यन्तरे
न्यस्तं भस्मवति त्र्यहं हुतभुजा यन्त्रेऽप्रमत्तः पचेत् ॥१५८॥
तत्कूप्यूर्ध्वगतं रसेन्द्रमसितं तत्पञ्चमांशं विषं
ताम्रं सूतसमं बलिं विषसमं सग्रन्थितीक्ष्णत्रयम् ।
प्रत्येकं विषभागिकं तदखिलं जम्बूवटोदुम्बरा-
श्वत्थत्वक्सलिलैर्विमर्द्य विहितो नाम्ना ज्वरप्रोत्थितः १५९

टी०—समभागं गन्धकपारदहरितालं, दिनं प्रहरचतुष्टयं, विट्पञ्चाङ्गुलः दुर्गन्ध एरण्डः, निम्बूफलं, मार्कवः, हपुषा सेरणीति लोके, दारुहरिद्रा, पलाण्डुः गृञ्जनविशेषः, एषां रसैरेकवारं भावयित्वा, सूर्यातपे शुष्कं, कूपीमध्ये दत्तं, रक्षायन्त्रे सावधानः सन् अग्निना पचेत् । भस्म तु चिञ्चापलाशयोः, संप्रदायात् । कृष्णवर्णं वत्सनाभं पञ्चमभागं, ताम्रभस्म रसेन्द्रतुल्यं, गन्धः पञ्चमांशः, पिप्पलीमूलं त्रिकटु च प्रत्येकं विषतुल्यम् । एतज्जम्ब्वादित्वग्भिर्विमर्द्य कृतः, रसैः प्रत्येकं सप्तधा भावितः, ज्वरनाशनरसो भवति, अनुपानं तु शर्करा ज्ञेया ॥ १५८ ॥ १५९ ॥

नवज्वरहरीं वटिकामाह—

निम्बूभृङ्गजलैः पलद्वयमितैर्गद्याणकेनोषणा-
त्क्षुण्णाद्द्वादशकर्णिकाभिरुदितादर्कप्रसूनादपि ।
गुञ्जामात्रममुं निपीय घटिकामात्रेण मुक्तो ज्वरा-
त्संस्वेद्य ज्वरहारिणी निगदिता रुग्जिष्णुना विष्णुना १६०

टी०—निम्बूभृङ्गरसैः प्रत्येकं पलद्वयैः, मरिचाच्छ्ण्माषकेण, विकसितादर्कपुष्पाद्द्वादशकर्णिकाभिः द्वादशसंख्याकरविबीजकोशैः, एकीकृत्य मर्दितात्, गुञ्जामात्रमार्द्रकरसेन निपीय, नवज्वरान्मुक्तः स्यात्स्वेदं कृत्वा । विष्णुना इति विष्णुनामभिषजा उक्ता ॥ १६० ॥

नव्यचन्द्राभिधामाह—

हृद्धात्रीविषमीशबीजमरिचाङ्कोल्लोत्थबीजं बलिं
तुल्यं मार्कवबीजमम्बुधिलवं द्विश्चित्रमूलाम्भसा ।
त्रिर्भृङ्गस्वरसैर्विभाव्य रचितः स्यान्नव्यचन्द्राभिधः
पीतो जम्भलकार्द्रकाम्बुभिरयं वल्लप्रमाणो रसः ॥ १६१ ॥
यामार्धेन जयेन्नवज्वरमिमं पारीन्द्रपोतो यथा

**टी०**—हृद्धात्री चोक इति लोके, विषं, पारदः, मरिचं, श्वेताङ्कोल्लबीजं, गन्धकः, एतत्समभागं, भृङ्गराजबीजं चतुर्भागं, चित्रकमूलरसेन द्विवारं भाव्यं, मार्कवरसेन त्रिवारं, एवं कृतो रसः, निम्बूफलार्द्रकरसैः वल्लमितः पीतः नवज्वरं घटिकाचतुष्टयेन नाशयति; यथा पारीन्द्रपोतः सिंहबालकः गजं जयति ॥ १६१ ॥

मृत्युञ्जयरसमाह—

द्वौ लेलीतकतोलकौ च मरिचादेकः स एवायसः ।
एतत्सर्वमयोमयान्तरगतं द्राग्गोहविःपाचितं
त्र्यंशं शुद्धमलं चतुर्लवमपि म्लेच्छं शरांशं विषम् ।
षड्भागं जयपालबीजमखिलं संमर्द्य तिक्तानल-
क्वाथैर्द्वादशधा तथाऽऽर्द्रकरसैस्त्रिःसप्तकृत्वः कृतः ॥ १६२ ॥
स्यान्मृत्युञ्जय एषकः शतदलाम्भोभिर्निपीतो यव-
द्वन्द्वैकद्वयसो निहन्ति नितरां सामान्निरामानपि ।
जीर्णानप्यचिरोद्भवांश्च विषमान् पञ्चापि नानाविधा-
नौदर्यान् सविबन्धनान् गदवरान्हन्त्येव रेकैः परम्॥१६३॥

**टी०**—गन्धकाद्वौ भागौ, मरिचादेकः, एक एव लोहात्, एतदयःपात्रस्थं नवीनगोसर्पिषा पक्वं, त्र्यंशं अलं हरितालं, चतुर्भागं म्लेच्छं हिङ्गुलं ताम्रं वा, शरांशं पञ्चभागं विषं, जयपालबीजं षड्भागं; एतत् सर्वं तिक्ता कटुकी, अनलश्चित्रकः, अनयोः क्वाथैर्द्वादशधा विभाव्य, ततः आर्द्रकरसैः त्रिःसप्तकृत्वः एकविंशतिवारं विभाव्य, कृतो रसः मृत्युञ्जयनामकः स्यात् । एषकः स्वार्थे कः, शतदलाम्भोभिः कमलरसैः सेवन्तीपुष्परसैर्वा निपीतः, सामान्निरामानपि निहन्ति । यवानां द्वन्द्वैकं गुञ्जामात्रं तत्परिमाणं; प्रमाणे द्वयसच्; तथा अचिरोद्भवान्नूतनांश्चापि विषमान् नानाविधानौदर्याञ्जठरगुल्मादीन् सविबन्धान्मलावरोधेन युक्तान्महागदान्हन्ति, कस्मिन्सति ? विरेचने सति ॥ १६२ ॥ १६३ ॥

चिन्तामणिरसमाह—

**तद्वद्गन्धकसूततात्रगगनैरेकांशकैरेकशः**
**सद्व्यंशामृतकन्दकैर्लघुचितैः कारीषखण्डानलैः ।**
**भूगर्तेऽङ्गुलिषट्कखातपरिधौ संस्तीर्णताम्बूलिका-**
**पर्णैः संविहितैस्तथा सिकतयोपर्यप्यलं स्वेदितैः ॥१६४॥**
**पश्चाद्विंशतिकुम्भिबीजशकलैरेकीकृतैः श्लक्ष्णश-**
**स्त्रिः कैरार्द्रकजैर्विलोड्य रचितश्चिन्तामणिः स्याद्रसः ।**

**टी०**—गन्धकः, पारदः, ताम्रभस्म, अभ्रकभस्म च, एतैः प्रत्येकमेकभागैः, सद्विभागविषैः, अङ्गुलिषट्कखातपरिधौ अङ्गुलीनां षट्कं तेन खातः निखनितः परिधिर्यस्य एवंभूते भूगर्ते, विस्तीर्णताम्बूलिकापर्णैराच्छादिते, तथा सिकतया उपरि आच्छादितैः, अल्पवनोत्पलवह्निभिः स्वेदितैः, पश्चाद्विंशतिभागैर्जेपालबीजशकलैरेकीकृतैः, आर्द्रकजैः रसैर्विलोड्य रचितश्चिन्तामणिरसः स्यादिति योजना । सर्वैरेकीकृत्य गोलकं कृत्वा, भूगर्ते संस्वेद्य, पश्चादार्द्रकरसेन भावयित्वा, गुञ्जामात्रं दद्यात् । तद्वत्पूर्वगुणवत् ॥ १६४ ॥

विद्याधरीगुटिकामाह—

**गन्धम्लेच्छरसामृतार्ककटुकाव्योषं त्रिवृद्दन्तिका-**
**हेमाह्वात्रिफलाश्च टङ्कणममूभिः स्यात्समा तिन्तिणी ॥१६५॥**
**त्वग्बीजै रहिता च पक्वसुरसा संमर्द्य माषोन्मिता**
**लीढा केन नवज्वरेषु गुटिका विद्याधरी शस्यते ।**

**टी०**—गन्धकः, म्लेच्छो हिङ्गुलः, पारदः, विषं, ताम्रभस्म, कटुकी, त्रिकटु, श्यामा, दन्तीबीजं, हेमाह्वा स्वर्णक्षीरी 'चोक' इति लोके, फलत्रिकं, टङ्कणक्षारः, एतैस्तुल्या अम्लिका परिपक्वा बीजत्वग्रहिता; एतत्सर्वं संमर्द्य कृता गुटिका माषमात्रा; केन उष्णोदकेन सह लीढा, नवज्वरेषु शस्यते ॥ १६५ ॥

त्रैलोक्यतापहररसमाह—

**पथ्यापारदताम्रगन्धचपलातिक्तात्रिवृद्दन्तिका-**
**बीजं व्योषवरास्थि वज्रिपयसा त्रिर्भावयित्वा कृतः ॥१६६॥**
**पीतोऽयं मधुनैकरक्तितुलितस्त्रैलोक्यतापापहः**
**सद्यो हन्ति नवज्वरं विषमिव श्रीचारुचामीकरम् ।**

---

१ ०'बीजशकलव्यामिश्रकैरेकशः' इति पा० ।

टी०—हरीतकी, पारदः, ताम्रभस्म, गन्धकः, चपला पिप्पली, कटुकी, श्यामा, जेपालबीजं, त्रिकटु, वरास्थि विषतिन्दुबीजं, एतत्सर्वं स्नुहीक्षीरेण भावयित्वा कृतो रसः, मधुना रक्तिकातुल्यः पीतः, सद्यो नवज्वरं हन्ति। सुवर्णं यथा विषं हन्ति तथा रसोऽयम् ॥ १६६ ॥—

इदानीं पूर्वोक्तानां प्रभावात्सकलरोगघ्नत्वं वदति।—

एते यद्यपि नूतनज्वरहरा ह्येवोपदिष्टा मया
शस्यन्ते न चिरन्तनेष्वपि कथङ्कारं ज्वरेष्वाशिताः ॥१६७॥
किन्तु स्वच्छतया विचार्य चतुरैर्मात्रानुपानैर्यथा-
न्यायस्थैरथ ते स्वयुक्तिरचितैर्देया ज्वरिभ्यो नरैः।
नासाध्येषु न सन्निपातिषु न वा वृद्धेषु बालेषु न
प्रक्षीणेषु न गर्भिणीषु विषयासक्तातिसारिष्वपि ॥ १६८ ॥
नातिक्षीणकृशेषु[1] पेलवतनुस्वागन्तुकातङ्किषु
प्रायश्चैष निषेधवाक्यनिवहः सौम्येषु योगेषु न।

टी०—एते पूर्वोक्ता वक्ष्यमाणाश्च यद्यपि नवज्वरघ्ना एव उक्ताः, तथापि जीर्णज्वरेषु भक्षिताः न शस्यन्ते इति न; अपिपदादुदरादिष्वपि। परंतु स्वबुद्ध्या विचार्य पण्डितैर्नरैर्यथोक्तैः स्वबुद्धिकल्पितैर्वा मात्रानुपानैः, एते रसादयः ज्वरपदादन्येष्वपि। तेष्वयं विशेष इत्याह–नेत्यादि। एष निषेधवाक्यदण्डः सौम्ययोगेषु विषादिरहितेषु नास्ति, ते रसा असाध्यादिषु देया इति भावः ॥ १६७ ॥ १६८ ॥

अथ स्वच्छन्दगोलाख्यं रसमाह—

पथ्यात्र्यूषणवह्निमन्थसुरसाः शृङ्गी विषं टङ्कणं
गन्धं तालकमाक्षिकायसरजः सूतो द्रवन्तीफलम् ॥ १६९ ॥
निर्गुण्डीस्वरसेन भावितमिदं स्वच्छन्दगोलाभिधं
गुञ्जायुग्ममितं निहन्ति निखिलं शीतोष्णपूर्वं ज्वरम्।

टी०—हरीतकी, त्रिकटुकं, वह्निमन्थस्तर्कारीबीजं, निर्गुण्डीबीजं, शृङ्गी कर्कटशृङ्गी, विषं वत्सनाभं, टङ्कणक्षारः, गन्धकः, हरितालकः, स्वर्णमाक्षिकः, लोहभस्म, पारदः, जेपालः, एतन्निर्गुण्डीस्वरसभावितं त्रिवारं, स्वच्छन्दगोलाख्यं रसं जानीयात्। तद्गुञ्जाद्वयमितं शीतादिपूर्वज्वरं निहन्ति, अग्निमान्द्यादीनपि हन्ति ॥१६९॥—

१ 'नातिस्थूलकृशेषु' इति पा०।

महाज्वराङ्कुशमाह—

सूतेन्द्रामृतगन्धकात्समलवाद्धत्तूरबीजं पुन-
स्तुल्यं तैः सकलैः समं त्रिकटुकं स्तोमं सकृद्भावितम् ॥१७०॥
जम्बीरास्थिरसैर्विमर्द्य विहितं प्राग्वन्निपीयार्द्रक-
द्रावैः शार्करिलैर्नवज्वरसृणिं सर्वज्वरान्मुच्यते ।

टी०—पारदः, विषं, गन्धकः, एतान् समभागान्; तैस्तुल्यं धत्तूरबीजं, षड्भागं व्योषं, एतज्जम्बीरबीजरसैरेकवारं विभावितं, गुञ्जाद्वयमितमार्द्रकरसेन सशर्करेण पीत्वा सर्वज्वरान्मुक्तो भवति । अयं नवज्वरसृणिः.नवज्वराङ्कुशो ज्ञेयः ॥१७०॥

अथ सूतेशमाह—

सूताभ्रायसभूतिगन्धगरलम्लेच्छात्सवैक्रान्तका-
त्रिस्त्रिर्मार्कवशिग्रुवह्निसरलातङ्कार्द्रकाम्भःप्लुतात् ॥ १७१ ॥
श्लक्ष्णीकृत्य विलिप्य भाण्डकुहरे प्राञ्चानहालाहलो
निर्यद्धूमविधूपितो रसवरो निष्काश्य निर्मापितः ।
सूतेशः सुरसारसेन रसितो गुञ्जाद्वयीतोलितो
हन्यादष्टविधाञ्ज्वरांश्च विषमाञ्छीतोष्णसाधारणान् ॥१७२॥

टी०—पारदः, अभ्रकं, लोहभस्म, गन्धकः, विषं, म्लेच्छं ताम्रभस्म, वैक्रान्तभस्म, समभागानेतान्; भृङ्गराजः, शोभाञ्जनः, चित्रकः, सरला त्रिवृत्, आतङ्कः कुष्ठं, आर्द्रकं शृङ्गबेरं, एतद्रसैः त्रिवारं भावितान् । एतान् श्लक्ष्णीकृत्य कोमलीकृत्य, भाण्डमध्ये लेपयित्वा, एकौषधसमभागविषान्, निर्यन्निर्गच्छन्यः धूमः तेन धूपितान् एतान्, भाण्डान्निष्काश्य रचितः सूतेशो नाम भवति । स गुञ्जाद्वयमितः, तुलसीरसेन भक्षितः, वातादिजाञ्छीतोष्णसाधारणाञ्ज्वरान् हन्यात् ॥ १७१ ॥ १७२ ॥

एकसूतेश्वररसमाह—

सूतात्पादिकमभ्रगन्धकुनटीलोहाहिताम्रं पृथक्
तापीजत्रपुणी च भावितमिदं त्रिर्मातुलान्या रसैः ।
कृष्णान्मातुलतोऽपि तत्किल मृदो मूषान्तराले पचे-
दन्ते पारदमानदारवयुतं तत्सप्तधा भावयेत् ॥ १७३ ॥
मत्स्याक्षीत्रिकटुद्रवैरपि तथा ताभ्यां ततो धूपितं
प्राञ्चानेन विषेण सिद्धमहिमा स्यादेकसूतेश्वरः ।

**गुञ्जाऽस्यार्द्रकवारिणा ससिकतेनान्येन वा केनचि-**
**द्दत्ता शैत्यककासपञ्चविषमानन्यांश्च रोगाञ्जयेत् ॥ १७४ ॥**

टी०—पारदः, कुनटी मनःशिला, अहिर्नागभस्म, प्रत्येकमेतत्पादिकं चतुर्थभागं, तापीजं माक्षिकं, त्रपु वङ्गभस्म; मातुलानी भङ्गा, तद्रसेन त्रिर्भावयेत्, कृष्णधत्तूरादपि; मृत्तिकामूषामध्ये पचेत् । ततः पारदमानं विषं दत्त्वा, मत्स्याक्षी ब्रह्ममण्डूकी, तद्रसैः त्रिकटुकरसैश्च भावयेत् । ताभ्यां मत्स्याक्षीत्रिकटुकाभ्यां रसमानेन विषेण च डमरुकाख्ययन्त्रे ऊर्ध्वलेपेन धूपयेत् । अयमेकसूतेश्वरो नाम रसः, सिकता शर्करा, तुलसीरसेन ताम्बूलरसेन वा सह दत्ता गुञ्जा, अन्याञ्ज्वरोपद्रवादीञ्जयेत् । पाकस्तु भूधरयन्त्रेण ॥ १७३ ॥ १७४ ॥

अथ शीतारिमाह—

**सूतं गन्धकमर्कसोमलयुतं चेतःशिला खर्परं**
**तालः साधुसुधेति कारविरसैः संमर्दितं सप्तधा ।**
**मूषापाचितमष्टमांशमिलितं हैयङ्गवीनेन त-**
**द्दीप्यत्र्यूषणतुर्यभागघटितं मत्स्याजपित्तप्लुतम् ॥ १७५ ॥**
**प्रत्येकं मुनिभिः सशर्करमिदं दुग्धेन वल्लैककं**
**पीतं शीत[1]पुरःसराञ्जयति तत्सर्वज्वरान्पथ्यतः ।**

टी०—पारदः, गन्धकः, ताम्रं, सोमलः, मनःशिला, खर्परं, हरितालं, साधुसुधा विषं, कारवल्लीरसैः संमर्दितं, भूधरे मूषापाचितं, नवनीतेन मिलितं; दीप्यो अजमोदा, त्र्यूषणं त्रिकटु, तुर्यभागः चतुर्थभागस्तेन घटितम् । मत्स्यपित्तेनाजपित्तेन भावितं सप्तवारं, सशर्करं वल्लैककं दुग्धेन सर्वशीतज्वराञ्जयति, दुग्धोदनाशिनः ॥ १७५ ॥–

अथ ज्वरान्तकमाह—

**सूतम्लेच्छवियद्बलीन्शशिचतुस्त्रिद्विः सुषव्या रसैः**
**पित्तैर्मत्स्यभवैर्विभाव्य विहितः प्राग्वज्ज्वरान्तो रसः ॥१७६॥**

टी०—पारदः, हिङ्गुलः, अभ्रकं, गन्धकः, क्रमेण एकचतुस्त्रिद्विभागाः, सुषवी कारविका, तस्या रसैः सप्तधा भावितः, प्राग्वदेकाहिकान् जयति ॥ १७६ ॥

अर्धनारीश्वररसमाह—

**तीक्ष्णं दारददारदार्कदरदं लेलीतकं माक्षिकं**
**अब्ध्येकर्तुशरद्विसप्तगुणितं तद्व्युत्क्रमान्मर्दितम् ।**

---

१ 'भक्तपयोभुजो विजयते द्राक् सर्वशीतज्वरान्' इति पा० ।

वह्नेर्मूलरसैस्त्रिधाऽपि शफरीपित्तेन संप्लावितं
यन्त्रे शार्करिले दिनार्धमखिलं तत्काचकूप्यां पचेत् ॥१७७॥
पाकान्ते तु निकुम्भबीजशकलादष्टाभिरंशैर्युतं
तत्सूक्ष्मीकृतमेकतः खलु रसः सिद्धोऽर्धनारीश्वरः ।
यत्पार्श्वस्तनजेन चाजपयसा वल्लैकमात्रोऽशित-
स्तत्पार्श्वज्वरमाशु हन्त्युभयतः सर्वाङ्गजं च ज्वरम् ॥१७८॥

टी०—तीक्ष्णं लोहभस्म, दारदो वत्सनाभः, दारदः पारदः, ताम्रं, हिङ्गुलः, गन्धकः, माक्षिकः, अब्धयश्चत्वारः, ऋतवः षट्, शरः पञ्च, व्युत्क्रमाद्गुणितं सप्तभागो माक्षिक इत्यादि; चित्रकमूलरसैः मत्स्यपित्तेन रसं भावितं; वालुकायन्त्रे यामद्वयं पचेत्; जेपालाष्टभागैर्युतमेकतः मर्दितं; अजायाः यत्पार्श्वस्तनभवेन दुग्धेन पीतस्तत्पार्श्वस्थं ज्वरं हन्ति, अयञ्च प्रभावः, उभयस्तनजेन दुग्धेन पीतस्सर्वाङ्गजं ज्वरं हन्ति ॥ १७७ ॥ १७८ ॥

अथ कुष्ठादिवटिकामाह—

रुक्सूतामृतगन्धकत्रिकटुकश्रेष्ठाभिरेकांशत-
स्त्रिर्भृङ्गस्य रसैर्विभाव्य रचिता मुद्गप्रमाणा वटी ।
हन्यादग्निविबन्धशूलमुदरं तद्वत्समांशैर्वरा-
शुण्ठीजीरकवत्सनाभमरिचोग्राकज्जलीहिङ्गुभिः ॥ १७९ ॥

टी०—कुष्ठादिवटी वरादिवटी च । कुष्ठं, अमृतं विषं, श्रेष्ठा त्रिफला, समभागैः, कज्जली पारदगन्धकयोः । तद्वत्प्रागुक्तान् हन्यात् । इयमग्निमान्द्यप्रभृतिषु वटी ॥ १७९ ॥

चिन्तामणितैलमाह—

गन्धः पङ्क्तिलवोऽमुना समलवः स्यात्पारदष्टङ्कणः
श्वेताङ्कोल्लनिकुम्भयोर्द्विगुणितं बीजं च दन्त्यम्बुना ।
तत्सर्वं परिमर्द्य वासरयुगं छायाविशुष्कं चिरा-
त्स्याच्चिन्तामणिनामधेयमतुलं तैलं विरेकार्थकम् ॥ १८० ॥
यल्लिप्तं किमपि क्षणेन बहुशः कण्ठेऽथ वा वामये-
न्नाभौ वा नितरां विलिप्तमसकृत्सद्यो नरं रेचयेत् ।

घ्रातं यच्च नसा नरेण कुरुते यत्संख्यया संख्यया
तावन्त्येव विरेकमद्भुतकरं नृणां विबन्धापहम् ॥ १८१ ॥

टी०—गन्धकः पञ्जिलवो दशभागः, पारदो दशभागः, टङ्कणो दशभागः, श्वेताङ्कोलबीजं दन्तीबीजं विंशतिभागं प्रत्येकम् । विरेकः उभयमार्गेण; कण्ठे लिप्तं वान्तिकरं, नाभौ लिप्तं विरेकजनकम् । नासिकया यावद्वारमाघ्रातं तैलं तावद्वारं विरेकजनकं; अत एवाद्भुतम् । इदं च प्रसङ्गत उक्तम् ॥१८०॥१८१॥

अथ कालानलरसमाह—

सूतं वङ्गमपक्कमेव कनकाद्बीजं च नागं समं
वस्वर्धं करहाटमर्कमपि तत्संख्यं तथैवामृतम् ।
वस्वंशं गरलं च शुल्बमथवा संमर्दयेदेकतो
निर्गुण्डीसलिलेन तत्खलु रसः स्यान्नाम कालानलः ॥१८२॥
पीतो जीरकवारिणाऽयमखिलान्मुद्गप्रमाणो ज्वरा-
न्सद्यो हन्ति,

टी०—पारदः, वङ्गभस्म, अपक्कधत्तूरबीजं, नागभस्म, समं टङ्कटङ्कपरिमितं, करहाटः आकारकरभः, अर्कं ताम्रभस्म, वस्वर्धं भागचतुष्टयं प्रत्येकं, विषं भागचतुष्टयं अथवा वस्वंशं अष्टभागं निर्गुण्डीरसेन त्रिर्भावयेत्, जीरकवारिणा पीतं सर्वान्रोगान् कालानलाख्यो मुद्गमात्रः हन्ति ॥ १८२ ॥

तथैव निर्विषविषश्रेष्ठात्रितीक्ष्णेश्वरैः ।
वैगन्धालकटङ्कणाजयफलैर्भृङ्गाम्भसा वासितैः
सिद्धोऽश्वानलनामको विजयते विश्वाजलेन ज्वरान् ॥१८३॥

टी०—एवमेव निर्विषा निर्विषी, श्रेष्ठा त्रिफला, त्रितीक्ष्णं व्योषं, ईश्वरः पारदः, वैगन्धः गन्धकः, अलकः हरितालः, टङ्कणं, अजयफलं जेपालबीजं, भृङ्गराजरसेन भावितमार्द्रकरसेन च घोडाचोलीति ख्यातः ॥ १८३ ॥

हिङ्गूलोद्भवताम्रगन्धगगनम्लेच्छान् क्रमाद्वर्धितान्
कारव्याः स्वरसेन मीनजनुषा पित्तेन वा सप्तशः ।
आघ्राव्याऽऽरचितो ज्वरानतिचिराद्दुष्णज्वरं नूतनं
हन्यादार्द्रकवारिणा सचपलाक्षौद्रो द्विवल्लः परम् ॥१८४॥

टी०—गगनमभ्रकं, म्लेच्छं हिङ्गुलः, वर्धितानेकस्मादेकं द्विगुणितं, कारवी-

रसेन मत्स्यपित्तेन वा भावितः, ज्वरारिनामा रसो भवति; आर्द्रकरसेन उष्णपूर्वकं नवज्वरं हन्यात्, जीर्णज्वरे पिप्पलीमधुभ्यां सह देयः ॥ १८४ ॥

अथ शीतज्वरारिमाह—

कम्बुः फेनमहेः शिला सरसकं माक्षीकमेकांशकं
शुल्वं सोमलमक्षिभागमखिलं त्रिः कारवल्लीरसैः ।
आर्द्रीकृत्य कृतः सुकृष्णलमितः शीतज्वरारिः सिता-
मिश्रो हन्ति सुदुग्धभक्तकभुजस्तूष्णान् सशीतज्वरान् १८५

टी०—शङ्खः, अहिफेनं, मनःशिला, रसकः कलखापरी, माक्षीकं सुवर्णमाक्षीकं, प्रत्येकमेकभागं, शुल्वं ताम्रं, सोमलं, अक्षिभागं द्विभागं; कारवल्लीरसैर्भावयित्वा, गुञ्जामात्रा वटी कार्या, अयं सितया सह शीतोष्णपूर्वकाञ्ज्वरान् सचातुर्थिकानपि नाशयति ॥ १८५ ॥

अथ ज्वररिपुमाह—

रसस्यैकं भागं दरदझषपित्तामृतवलीन्
द्विभागान् सौभाग्यं त्रिरथ मरिचं वेदतुलितम् ।
विमर्द्यार्द्रद्रावैर्ज्वरसुररिपुश्चेद्विरचितः
किमन्यैरेकद्वित्रिचतुरहजातज्वररिपुः ॥
जडिम्न्यार्द्रद्रावैः ससितजरणाम्भोभिरपरै-
र्ह्यतिसृत्यां युक्तः सुरसदलवार्भिः समरिचैः ॥ १८६ ॥

टी०—मत्स्यपित्तं शुष्कम् । वेदतुलितं चतुर्भागं, अन्यै रसैः, जडिम्नि शैत्ये, तुलसीस्वरसैर्देयः ॥ १८६ ॥

अथ चातुर्थिकेभाङ्कुशमाह—

रसं गन्धकं निर्विषा वत्सनाभं द्वयं तुत्थतो गौरिपाषाणतालम् ।
विमर्द्यापि गोलीकृतोऽयं रसेन्द्रो महापूर्विकाया बलाया रसेन
रसैर्धूर्तकस्यापि शीताङ्कुशोऽयं सखण्डस्तु चातुर्थिकेभाङ्कुशोऽयम्
रसं गन्धकं निर्विषा तुत्थयुग्मं शिलातालकं नागपाषाणयुक्तम् ॥
शितिस्वर्णभङ्गासहादेवनीरैः कलायप्रमाणस्तथैवायमुक्तः ।
शुद्धं खर्परमष्टभागममलं स्वर्णं च मुक्ताफलं
हिङ्गूलं मरिचं विवर्धितमिदं हैयङ्गवीनेन च ।

भाव्यं जम्भरसेन च त्रिदिवसं निःस्नेहमेतद्धिया
गुञ्जाद्वन्द्वममुष्य मालिनिवसन्तस्य ज्वरे धातुगे ।
अद्याद्रक्तभवे गदेऽप्यतिकृशे क्षीणे च बाले क्षये
वृद्धे गर्भिणिसूतिकासु मधुना क्षीरान्नभुक्स्वेच्छया ॥१८९॥

इति मालिनीवसन्तः ।

चपलायाः प्रस्थमेकं स्नुहीक्षीरेण भावयेत् ।
एकविंशतिधा पूर्वं तदर्धं मलमायसम् ॥ १९० ॥
तदर्धं दरदं क्षिप्त्वा त्रयमेकत्र भावयेत् ।
गोजिह्वाशाल्मलीक्षीरगोक्षुरेक्षुरसैः पृथक् ॥ १९१ ॥
श्लक्ष्णचूर्णं पुनः कृत्वा मात्रां गुञ्ज्याद्यथाबलम् ।
क्षीरं जातु पिबेत्तस्य मधुकेन समायुतम् ॥ १९२ ॥
सुधापिप्पलीयोगोऽयं जीर्णज्वरमपोहति ।
मेदोदोषोदरं शोथक्षयक्षयकरः परः ॥
क्षीणान्धातून्वर्धयति प्रोक्तश्चात्रेयसूरिणा ॥ १९३ ॥

इति सुधापिप्पलीयोगः ।

भागैकं वह्निजातं द्वितयमथ नृणां खर्परान्मूत्रशुद्धात्
सर्वं खल्वे विमर्द्य त्रिदिनमपि गवां कालसेयोद्भवेन ।
जम्बीरैः शुष्कचूर्णं यदवधि तु भवेन्मालिनीप्राग्वसन्तः १९४

इति लघुमालिनीवसन्तः ।

सूतायोभ्रकताम्रभस्ममखिलं तुल्यं ततो गन्धकं
द्विर्भागं पलिकीकृतं कदलिकापत्रे तु संस्थापितम् ।
माषद्वन्द्वमितां तथा मधुकणायुक्तां पुनः पर्पटीं
दद्याद्धातुगते ज्वरे ह्यतिसृतौ नाम्ना तु पञ्चामृताम् ॥
कासश्वासगुदाङ्कुरग्रहणिकायक्ष्मामये सद्गुणाम् ॥ १९५ ॥

इति पञ्चामृतपर्पटी ।

---

१ घृताक्तायां दर्विकायां संस्थापितामित्यर्थः । २ 'कदलिकापत्रेण संछादिताम्' इति पा०।

स्वर्णं रौप्यं रविगगनकं लोहसूतं समांशं
मुक्ताभागं विमलबलिकं पारदाद्युग्मभागम् ।
मर्द्यं कन्दैः कदलिजनकैः शाल्मलीनां रसैर्वा
कन्याद्रावैर्मुनिदिनमथो वल्लयुग्मं निहन्यात् ॥
मेहं तापं मधुचपलया सेवितां मासमात्रं
स्त्रीणां रोगानशेषानपहरति पुनः पर्पटी काञ्चनीयम् १९६

इति सुवर्णपर्पटी ।

स्वर्णं वैक्रान्तसूतं समलवममलं गन्धकं शुक्तिकोत्थं
युग्मांशं पादभागं कुलिशभसितकं टङ्कणं सर्वतुल्यम् ॥१९७॥
जम्बीरैर्मातुलिङ्गैस्त्रिदिवसमसकृद्भावितं शुष्कगोलं
मृद्वस्त्रैर्वेष्टयित्वा तदनु सुविमले किट्टमध्ये निवेश्य ।
भाण्डे मृल्लिप्तसंधौ मृदुतरशिखिना पाचितं वेदयामं
स्वाङ्गं शीतं गृहीत्वा मृगमदसलिलैर्भावयेद्द्वित्रिवारान् १९८
सिद्धो राजमृगाङ्क एष मधुना कृष्णायुतेन क्षयान्
कासं पञ्चविधं क्षयं क्षतरुजं जीर्णज्वरं धातुगम् ।
हन्यान्मेहरुजामकालपलितं कान्तिं च वीर्यं दृढं
कुर्याद्वैद्यवरेण चन्द्रशिखरेणोक्तो विमृश्याखिलम् ॥ १९९ ॥

इति मुक्ताराजमृगाङ्कः ।

हेम्नो भस्म रसेन तुल्यतुलितं मुक्तां विशुद्धां ततो
द्विर्भागां समगन्धकं तु सकलात् पादेन टङ्केन च ।
संमर्द्य खलु काञ्जिकेन सकलं शुष्कं तु गोलं पचे-
द्भाण्डे सैन्धवपूरिते तु शिखिना शीतं ततश्चूर्णयेत् ॥२००॥
भाव्यं रङ्कुमदेन वल्लतुलितं तापेऽग्निमान्द्ये क्षये
कासे श्वासयुते मृगाङ्कमलघुं खादेत्कणाक्षौद्रभुक् ।

इति महामृगाङ्कः ।

१ 'माससंसेवितेयं' इति पा० ।

माणिक्यं वज्रमेकं गरुडवमिभवं नीलकं पुष्परागं
गोमेदं विद्रुमं द्विर्विदुरमणिमथो भस्म शङ्खस्य शुक्तेः २०१
तार्प्यं नागं च वङ्गं दरदशिखिगलं टङ्कणं राजवर्तं
गन्धं त्रिर्हेमतारं रविघनममलं तालकं हृच्छिला च ।
वैक्रान्तं कान्तलोहं रसकयुगलकं वेदभागं सुमुक्तं
सूतं सर्वाष्टमांशं त्रिदिनमविरतं मर्दनीयं सुयत्नात् ॥२०२॥
त्रिर्भाव्यं कन्यकाभिर्विषदहनबलावारिणा सप्तवारं
गोलं मृत्कर्पटैर्वै लवणविरचिते पाचयित्वा दिनैकम् ।
संमर्द्य स्वाङ्गशीतं मृगमदसलिलैः पिप्पलीक्षौद्रयुक्तं
वल्लैकं श्वासकासक्षयतमकगदे रत्नगर्भान्मृगाङ्कात् ॥२०३॥

इति नवरत्नमृगाङ्कः ।

स्वर्णं तारं समुक्तं व्रततिकिसलयं माक्षिकं वज्रसूतौ
लोहं चाभ्रं च शुल्वं मृतममलतरौ नागवङ्गौ च गन्धम् ।
भागैर्वृद्धं दिनैकं घनतरघटनैर्मर्दयेत्त्रिस्त्रिवारं
कन्याधात्रीविदारीमुशलिवरिजयाशाल्मलीधूर्तमूलैः ॥२०४
गोलं वेष्ट्यं पलांशैर्मदनतरुभवैर्मृत्स्नया चापि शुष्कं
गर्ते सामुद्रपूर्णे लघुतरदहने पाचितं वेदयामम् ।
दत्त्वा तत्षोडशांशं विषमतिविमलं[2] गन्धकं तेन तुल्यं
मर्द्यं धूर्तैर्जयाभिः खसखसतिलजैर्वारिभिः कन्यकोत्थैः२०५
पिण्डं सिन्धूद्भवेन प्रविलुलितमथो वेष्टितं माषपिष्टैः
स्थाप्यं यन्त्रे त्रियामं लवणविरचिते पाचयेदग्निना तु ।
स्वाङ्गं शीतं कुमारीबटुकवलियुतं पूजितं वल्लमात्रं
कृष्णाक्षौद्रैर्मृगाङ्कः क्षयतिमिररविर्भाषितो जीर्णवैद्यैः॥२०६

इति महामृगाङ्कः ।

---

१ 'कांस्यं' इति पा० । २ 'दुग्धे शुद्धं विषं तु कलितशशिकलं' इति पा० ।

रुक्मं तीक्ष्णं च कान्तं रजतरसभवं भस्म वज्राहितुल्यं
मुक्ता सर्वैः समाना द्विगुणमथ रसाद्गन्धकं टङ्कणं च ।
पादांशं सर्वमेतत्तुषभवमृदितं पूर्ववद्यन्त्रपक्वं
स्वाङ्गं शीतं मृगाङ्कं मृगमदतुलितं यक्ष्मरोगे प्रशस्तम् २०७

इति मुक्तामृगाङ्कः ।

माक्षीकद्वितयं सुवर्णरसकं गन्धं सतारं पृथ-
ग्भागं विद्रुमताम्रशुक्तिजपवैर्द्वैभागमेकैकशः ।
वज्रायोऽभ्रककांस्यपारदफणीन् वैक्रान्तकान्तं पुन-
स्त्रिर्मर्द्यं तु वरात्रिजातदहनैर्मुस्तामृतायष्टिभिः ॥ २०८ ॥
सिंहास्यामुशलीविदारिकदलीगोकण्टकोशीरकै-
र्नारायण्यमृताशटीकरिकणाशुण्ठीकुमारीद्रवैः ।
गोदुग्धैर्मुशलीक्षुवारिवारिमृदितं गोलं पचेद्यामकं
मन्दाग्नौ च मृगाङ्कवत्परमसौ भाव्यस्ततो भावनैः ॥२०९॥
द्वे कस्तूर्यास्तु मृगाङ्कवन्मधुकणायुक्ता खगुञ्जा जये-
न्मेहार्शोग्रहणीगदोदरमरुद्व्याधिज्वरान् कामलाम् ।
पाण्डुं कुष्ठभगन्दरं बहुरुजं मूत्रं च शुक्रक्षयम् ॥ २१० ॥

इति सर्वेश्वरः ।

सूतायोऽभ्रकगन्धकं समलवं सूताङ्घ्रितुल्यं मृतं
स्वर्णं सर्वमिदं निधाय विमले खल्वे दिनं मर्दयेत् ।
कन्याव्योषवरापुनर्नवरसैः कच्छूलवङ्गैः पुन-
र्भाव्यं चित्रकपत्रकैर्घनतरं संवेष्ट्य धान्यान्तगम् ॥ २११ ॥
कुर्याद्ब्रह्मविनिर्मितं रसवरं यक्ष्मापहं पुष्टिदं
वल्लं क्षौद्रफलत्रयेण सहितं मेहाग्निमान्द्यप्रणुत् ।

इति चतुर्मुखः ।

वज्रैर्हेमरसाभ्रताम्ररजतैर्लोहैर्मृतैर्गन्धकैः
शङ्खैर्विद्रुममौक्तिकैश्च शिलया तालेन शुद्धैः पुनः ॥२१२॥

सप्ताहं परिमर्दितं दहनजैः क्वाथैस्तथाऽर्कोद्भव-
क्षीरैस्तद्दिवसत्रयं प्रमृदितं न्यस्तं कपर्दीषु च ।
रुद्ध्वा भाण्डतले मृदा सुवसनैः संछाद्य शुष्कं पुनः
संध्यायां खलु तीव्रकुञ्जरपुटे पक्वं सुशीतं पुनः ॥ २१३ ॥
ग्राह्यं सर्वमिदं विचूर्ण्य तुलितं सिन्दूरनाम्ना पुनः
सूतेनापि विक्रान्तपादमिलितं मर्द्यं दृढं तद्दिनम् ।
शिग्रुद्रावविमर्दितं मुनिदिनं त्रिःसप्तधा भावितं
मूलैश्चित्रकजैस्तथाऽऽर्द्रकरसैर्जम्बीरजैर्लुङ्गजैः ॥ २१४ ॥
शुष्कं चूर्णितपादटङ्कमिलितं सौभाग्यपादं विषं
तत्तुल्यं मरिचं लवङ्गचपलापथ्यार्द्रकं चामृतात् ।
प्रत्येकं सुमनःफलं त्वथ चतुर्थांशं पुनर्मर्दितं
जम्बीरेण तथाऽऽर्द्रकेण च तथा लुङ्गाम्भसा सप्तधा ॥२१५
वल्लद्वन्द्वमितं पुनर्मधुकणासंमिश्रितं सेवितं
दुर्नामक्षयपाण्डुकासशमनं मेहाग्निमान्द्यप्रणुत् ।
कुष्ठापस्मृतितापकृच्छ्रभगरुक्प्लीहोदरं विद्रधिं
साध्यासाध्यगदान्निहन्ति स रसस्त्रैलोक्यचिन्तामणिः २१६

इति त्रैलोक्यचिन्तामणिः ।

स्वर्णं भागमितं द्विभागममलं रूप्यं त्रिभागं पुन-
र्नागं वङ्गमयोरजोऽभ्रभसितं मुक्ताप्रवालं रसम् ।
शुद्धं भागचतुष्टयं सुमृदितं भाव्यं पुनः पौण्ड्रकैः
श्रीवासाजलरात्रिशाल्मलिभवैर्द्रावैः पृथक्सप्तधा ॥ २१७ ॥
मालत्याः कुसुमैस्तथा मृगमदैरम्लानपुष्पोद्भवै
रम्भाकुङ्कुमजैः पुनर्विलुलितः सिद्धो वसन्ताभिधः ।
वल्लद्वन्द्वमितो रसायनवरः शुक्रायुषोर्वर्धनः
स्त्रीपुंसोः क्षयकासबीजजनितं दोषं नियच्छेत्परम् ॥२१८॥

इति वसन्तकुसुमाकरः ।

सूतं गन्धकलोहमभ्रकनकं ताप्यं च ताम्रं मृतं
वङ्गं मौक्तिकविद्रुमं विमलकं कान्तं च नागं समम् ।
वाराहीद्रवभावितं मुनिदिनं कूप्यां न्यसेन्मुद्रितं
पाच्यं वालुकया सुपूर्णपिठरे घस्रं सुशीतं पुनः ॥ २१९॥
कस्तूरीघनसारकुङ्कुमरसैः श्रीखण्डलामज्जकै-
रम्लानस्य रसेन भावितमिदं त्रिस्त्रिः सुसिद्धो रसः ।
नाम्ना राजवसन्त एष कथितः पित्तामयिभ्यो हितः
क्षीणानां क्षतकासिनां मधुसितायुक्तो द्विवल्लोऽशितः[1] २२०

इति वसन्तराजः ।

कान्तं तीक्ष्णकमभ्रसत्त्वकनकं ताम्रं च ताराहिकं
वङ्गं विद्रुममौक्तिकं समतुलं सर्वैस्तु सूतः समः ।
क्षौद्रेण त्रिविमर्दितं तदखिलं क्षिप्त्वा तु मूषान्तरे
पाच्यं तार्क्ष्यपुटे सुशीतलमिदं वह्निद्रवैः सप्तधा ॥ २२१ ॥
नारायण्यमृताश्वदंष्ट्रकबलागुप्तोच्चटागोस्तनी-
द्रावैः शाल्मलिपाटलीमुशलिकाकाण्डेक्षुकूष्माण्डजैः ।
पथ्योदुम्बरकाद्रसैर्मुनिमितं मर्द्यः सुखल्वे धिया
त्वेषः कुङ्कुमचन्दनादिजनितैरद्भिश्च भृङ्गयुद्भवैः ॥ २२२ ॥
वल्लद्वन्द्वमितो रसायनवरो वृष्यः क्षयध्वंसनो
मेहादेर्दलनो रसश्च स महालक्ष्मीविलासाभिधः ।

इति महालक्ष्मीविलासः ।

सिन्दूरं रसपूर्वकं च विमलं कान्तं घनं गन्धकं
तुल्यं पारदपादिकं सुकनकं तारं मृतं तत्पुनः ।
मर्द्यं भूसितया वृषेण वरया वर्या विदार्या ततः
कन्याशाल्मलिगोक्षुरेण सितया ताल्याऽश्वया सप्तधा॥२२३

१ 'द्विवल्लोन्मितः' इति पा० ।

तत्पत्रैः परिवेष्ट्य तण्डुलभवे राशौ तथा पुष्पजे
न्यस्तं सप्तदिनं ततो मृगमदैर्लक्ष्मीविलासाभिधः ।
मेहध्वान्तहरः क्षयप्रशमनो वल्लत्रयं सेवित-
स्तत्तद्योगवरैः सितामधुघृतैर्मासं नियच्छेज्ज्वरान् ॥ २२४ ॥

इति लक्ष्मीविलासः ।

श्वेताङ्कोल्लरसेन पारदपलं संमर्द्य सप्ताहत-
स्तत्तुल्यं कनकं तयोः समतुलं गन्धं विशुद्धं पुनः ।
मर्द्यं श्वेतहयारिरक्तदहनैस्तालीरसैः सप्तधा
गोलं छागलमांसवेष्टितमथो माषैः प्रपिष्टैस्तथा ॥ २२५ ॥
तप्ते तैलघृतेऽथवा विनिहितं सिन्दूरतुल्यं यदा
जातं तत्क्षणमुद्धरेन्मधुसितासर्पिर्युतं क्षीरपः ।
भोज्यं लड्डुकपायसं ह्यनुदिनं सेवेत वन्ध्यां स्त्रियं
भोगान् सर्वऋतूद्भवान् सकुसुमान् कन्दर्पकेलीप्रियान् २२६

इति कामदेवरसः ।

सूतं गन्धकसंमितं त्रिकटुकक्काथेन संमिश्रितं
गोलं क्षीरविदारिकन्दविवरे न्यस्तं प्रलिप्तं पुनः ।
माषैर्लिप्तमथोऽङ्गुलेन तुलितं गव्ये घृते पाचितं
तच्चूर्णं पलसंमितं द्विपलकं सत्त्वं गुडूच्याः पुनः ॥ २२७ ॥
द्राक्षा कच्छुफलं तिला वरिजये प्रत्येककं पालिकं
मोचाया द्विपलं यवाः शरपला यष्टी द्विमुष्टिः शुभा ।
कृष्णाधात्रिबलात्रयेक्षुरभवैर्गोकण्टकैर्भावये-
त्सर्वं सप्तदिनं निवेश्य विमले पात्रे सितामिश्रितम् ॥२२८॥
माषद्वन्द्वमितं भजेन्निशि घृतं दुग्धं यथेष्टं पिबे-
द्वृष्येद्ग्राम्यकलिङ्गवच्च जयति श्रीकामदेवो रसः ।

इति कामदेवोऽपरः ।

---

१ 'विमले' इति पा० । २ '०त्रयेक्षुकदलीकन्दैः क्रमाद्भावयेत्' इति पा० ।

प्रत्येकं सुहिरण्यरौप्यरसकं द्विघ्नं फणीन्द्रायसं
त्रिघ्नं दानवभानुताप्यगगनं मुक्ताफलं विद्रुमम् ॥ २२९ ॥
वेदघ्नं हरजेन्द्रम्लेच्छकुनटीतालं विमर्द्याम्बुभि-
र्निर्गुण्डीवरिवानरीरविशटीरम्भाकुमारीद्रवैः ।
गोलं मृत्पटवेष्टितं सुलवणे यन्त्रेऽष्टयामावधिं
पक्त्वा स्वाङ्गसुशीतलं सुभिषजा पूर्वोदितैर्भावयेत् ॥२३०॥
हन्यादष्टविधं ज्वरं च विषमं षट् चातिसारांस्तथा
पाण्डून् पञ्च च पञ्च च ग्रहणिका एकादशे यक्ष्मणि ।
वल्लद्वन्द्वमितः कणामधुयुतो देवप्रसूनार्द्रक-
द्रावैर्वा मृगदर्पकुङ्कुमयुतो लक्ष्मीविलासो रसः ॥ २३१ ॥

इति श्रीबिन्दुविरचिता रसपद्धतिः संपूर्णा ।

इति श्रीमहादेवपण्डितकृता रसपद्धतिटीका संपूर्णा ।

---

श्री सुरेश्वरवैद्यविरचितं

# लोहसर्वस्वम् ।

मङ्गलाचरणम् ।

वन्दे विबुधगणार्चितचरणं शरणं समस्तभूतानाम् ॥
हिमगिरितनयाकान्तं त्रिलोचनं तुहिनकारूढम् ॥ १ ॥

ग्रन्थप्रयोजनम् ।

धर्मार्थकाममोक्षाणां शरीरं सिद्धिकारणम् ॥
तच्च तत्सिद्धये योग्यं भवत्यरोगमेव हि ॥ २ ॥
तदारोग्यक्रियासिद्धौ भेषजानि बहूनि च ॥
मूललोहादिकान्याहुर्मुनयः सुश्रुतादयः ॥ ३ ॥
तत्र नानारुजाक्रान्तशरीराणां शरीरिणाम् ॥
क्षीणानां दुर्बलाग्नीनां भेषजद्वेषिणामपि ॥ ४ ॥
स्वादुत्वात्स्वल्पमात्रत्वाल्लघुपाकितयाऽपि च ॥
प्रत्युग्रतरवीर्यत्वाल्लोहमेव प्रशस्यते ॥ ५ ॥
इति सुश्रुतहारीतव्याडिनागार्जुनादिभिः ॥
प्रोक्तानि लोहतन्त्राणि समालोक्य सुरेश्वरः ॥ ६ ॥
ब्रवीति लोहसर्वस्वं श्रीमद्भद्रेश्वरात्मजः ॥

लोहभेदाः ।

लोहं तच्चाष्टधा तत्र चतुर्णामत्र संग्रहः ॥ ७ ॥
नानामुनिमतप्रोक्तप्रयोगफलदर्शनात् ॥
तानि तीक्ष्णाभ्रहेमार्कसंज्ञकानि वदाम्यथ ॥ ८ ॥
उत्पत्तिलिङ्गसंशुद्धिसिद्धियोगसुयोजनैः ॥

लोहोत्पत्तिः ।

पुरा लोमिलदैत्यानां निहतानां सुरैर्युधि ॥ ९ ॥
उत्पन्नानि शरीरेभ्यो लोहानि विविधानि च ॥

लोहभेदानां लक्षणानि गुणाश्च ।

तत्र मस्तकजातानि शीतवीर्याणि तानि च ॥ १० ॥
घनदीर्घाङ्गयुक्तानि सिद्धानि सुरभीणि च ॥
वारिदस्निग्धगम्भीरस्वराणि मधुराणि च ॥ ११ ॥
पित्तव्याधिहराण्याहुरमूनि सकलान्यपि ॥

( अत्रान्तरा ग्रन्थपातः )

लोहं साराह्वयं हन्याद्ग्रहणीमतिसारकम् ॥ १२ ॥
औड्रं सार्वाङ्गिकं वातं शूलं च परिणामजम् ॥
छर्द्यतीसारपित्तानि ग्रहणीं च नियच्छति ॥ १३ ॥
वन्ध्याया गर्भदं बल्यं क्षयहृद्धातुवर्धनम् ॥
रसायनप्रयोगेषु शस्यते च कलिङ्गजम् ॥ १४ ॥
ज्वरं छर्दिं क्षयं रक्तपित्तं भद्राह्वयं जयेत् ॥
स्रंसनं दीपनं गात्रभेदनं कफवातजित् ॥ १५ ॥
ग्रहण्यर्शोविकारघ्नं लोहं वज्राभिधं मतम् ॥
शोथार्शःश्वासकासांश्च प्रमेहान् विषमज्वरान् ॥ १६ ॥
गुल्मांश्च पाण्डुरोगांश्च पाण्डिलोहो नियच्छति ॥
कान्तजं जयति प्लीहमम्लपित्तं शिरोरुजम् ॥ १७ ॥
गुल्मोदराश्मरीशूलमामवातं भगन्दरम् ॥
नीरवं कामलाशोथकुष्ठक्षयहरं मतम् ॥ १८ ॥
ओजः पुष्टिं बलं स्थैर्यं दत्ते जनयते सुतान् ॥
सर्वान् विजयते रोगान् कान्तलोहं न संशयः ॥ १९ ॥
यल्लोहं यद्गुणं दृष्टं तत्किट्टमपि तद्गुणम् ॥

मारणार्थं लोहपत्रप्रमाणम् ।

चतुरङ्गुलविस्तीर्णमायामैश्चतुरङ्गुलम् ॥ २० ॥
तिलोत्सेधतनुं चैव लोहपत्रं प्रचक्षते ॥

लोहशोधनविधिः ।

अथाग्निना प्रतप्तानि लोहपत्राणि निक्षिपेत् ॥
सप्तवारान् वराक्वाथे गिरिदोषप्रशान्तये ॥ २१ ॥
वरां चतुर्गुणां लोहात्ततो वारि चतुर्गुणम् ॥
दत्त्वा निष्क्वाथयेत्तावद्यावत्पादस्थितं भवेत् ॥ २२ ॥

लोहस्य मारणाद्यर्थं त्रिफलाक्वाथविधानम् ।

अथास्यैवं विशुद्धस्य मारणे विधिरुच्यते ॥
प्रोक्तः सुश्रुतहारीतव्याडिनागार्जुनादिभिः ॥ २३ ॥
तत्र त्रिगुणितं लोहात्समादाय फलत्रिकम् ॥
चतुर्गणे जले पक्त्वा ग्राह्यं पादावशेषितम् ॥ २४ ॥

लोहमारकाण्यौषधानि ।

अथ मारणकर्मार्थे कथ्यन्ते भेषजानि च ॥
तत्र गण्डिणिका मुख्या क्वचित्प्रोक्ता महौषधिः ॥ २५ ॥
क्वचित्सा सालहञ्चीति हरित्पर्णीति सा क्वचित् ॥
दिव्यौषधीति सा क्वापि क्वचिन्मर्तकलम्बुका ॥ २६ ॥
अन्यत्समानं चाङ्गेर्याः कुठारच्छिन्नसंज्ञकम् ॥
विकङ्कतं तृतीयं च चतुर्थं रक्तमारिषः ॥ २७ ॥
पञ्चमं त्वचकं प्रोक्तं षष्ठमुक्तं मनःशिला ॥
हिङ्गुलं सप्तमं प्रोक्तमष्टमं स्वर्णमाक्षिकम् ॥ २८ ॥
एतानि क्रमशो हन्युः पित्तं कफमसृग्दरम् ॥
विविधां पाण्डुतां कण्डूं वह्निमान्द्यं विवर्णताम् ॥ २९ ॥

लोहमारणविधिः ।

अत्राद्यैः पञ्चभिर्द्रव्यैरेतैरेकैकशो द्विशः ॥
त्रिशश्चतुर्भिः सर्वैर्वा बहुसैन्धवसंयुतैः ॥ ३० ॥

अम्लकाञ्जिकसम्पिष्टैस्तल्लोहं सान्द्रलेपितम् ॥
चतुष्टयेष्टकाकोष्ठे खदिराङ्गारपूरिते ॥ ३१ ॥
विन्यस्य ध्मापयेद्यत्नाच्चिरं भस्त्राद्यानिलैः ॥
ततस्तद्द्रवतां यातं स्थितं मध्येष्टकावटे ॥ ३२ ॥
लोहाङ्कुशेन त्रिफलाक्वाथे तप्तं विनिक्षिपेत् ॥
शिलाहिङ्गुलमाक्षीकैः सर्वैरेकैकशो द्विशः ॥ ३३ ॥
जम्बीरद्रवनिष्पिष्टैः सैन्धवेन समायुतैः ॥
आलेप्यमयसः पत्रं त्रिफलापिण्डमध्यगम् ॥ ३४ ॥
विद्रुतं पूर्ववद्धीमान् त्रिफलाम्भसि निक्षिपेत् ॥
एवं हि म्रियते लोहं सर्वमेव न संशयः ॥ ३५ ॥
अथवा सैन्धवोपेतैर्जम्बीरद्रवपेषितैः ॥
पूर्ववत्त्रिभिरेवैतैर्मिश्रितं तत्सुरेतितम्[1] ॥ ३६ ॥
मारयेत् पुटपाकेन भूयसा गोमयाग्निना ॥
अथवा शोधितं लोहं रेतितं काञ्जिकाम्भसा ॥ ३७ ॥
प्लुतं सूर्यांशुतापेन मारयेत्कतिचिद्दिनैः ॥
अथवा रेतितं लोहं घटस्थे त्रिफलाम्भसि ॥ ३८ ॥
क्षिप्तमागारगर्भस्थं वर्षेण सुमृतं भवेत् ॥
अथापनीय किट्टादि तदयस्त्रिफलाजलात् ॥ ३९ ॥
उद्धृत्य लोहदण्डेन लोहपट्टे विचूर्णयेत् ॥
ततोऽस्मिन् सान्द्रतां नीते गालिते सूक्ष्मवाससि ॥ ४० ॥
स्थालीपाकं यथा कुर्यात्तथा विधिरिहोच्यते ॥
ताप्यमश्मभिदः पिण्डे शृतं कोलस्य वारिणि ॥ ४१ ॥
विचूर्ण्य षोडशांशेन लोहपट्टे विचूर्णयेत् ॥
ततोऽस्मिन्माक्षिकोन्मानं हिङ्गुलत्रिफलाजलम् ॥ ४२ ॥

---

१ सुरेतितं सुचूर्णितम् ।

लोहपात्रस्थितं शोष्यमल्पमल्पं सुखाग्निना ॥
कृत्वा चतुर्गुणं लोहात् फलत्रिकमतो जलम् ॥ ४३ ॥
चतुर्गुणं पचेदत्र ग्राह्यं तत्पादशेषितम् ॥
लोहमेवं निरुत्थं स्यादमृतादधिकं गुणैः ॥ ४४ ॥

मृतलोहपरीक्षा ।

सम्भावितसमुत्थानं नैवाद्याद्विक्रियाभयात् ॥ ४५ ॥
एतद्वधपरीक्षार्थमन्धमूषागतं धमेत् ॥
मधुटङ्कणताराज्ययुक्तमेतदयश्चिरम् ॥ ४६ ॥
तत्र पूर्वमितं तारं यदि तत् सिद्धमेव च ॥
जानीयादधिके तारे लोहं सम्भावितस्थितिम् ॥ ४७ ॥
इति प्रोक्तः समासेन स्थालीपाकविधिक्रमः ॥
विना लोहविधानेन सकला निष्फलाः क्रियाः ॥ ४८ ॥

पुटपाकविधानेन लोहमारणम् ।

अथ तच्चूर्णितं वन्यकरीषैस्त्रिफलाम्भसा ॥
प्लुतं गर्ते निवाते त्रिः शरावपुटके पुटेत् ॥ ४९ ॥
तद्गर्तं यन्मतं तज्ज्ञैः सर्वतः षोडशाङ्गुलम् ॥
तत्र पञ्चपलात् प्रायो लोहं सप्तपलावधि ॥ ५० ॥
गर्तमानं प्रशंसन्ति सर्वतो हस्तसंमितम् ॥
द्रावेण लोडितं लोहं यावता भवति द्रवम् ॥ ५१ ॥
द्रवमानं तदेवात्र पुटपाकविधौ मतम् ॥
कल्काम्बुस्वरसक्काथभेदेन त्रिविधो द्रवः ॥ ५२ ॥
सङ्कीर्तितोऽत्र पुटने मुनिभिः सुश्रुतादिभिः ॥
तत्र कल्कोऽल्पपानीयपिष्टः कल्काच्च्युतो द्रवः ॥ ५३ ॥
अतोयात् स्वरसः क्काथो द्रव्येण क्कथितं जलम् ॥
तत्सिद्धं मृदुनि द्रव्ये चतुर्गुणितवारिणा ॥ ५४ ॥

पादस्थमष्टमांशस्थं कठोरेऽष्टगुणाम्भसा ॥
अथ पूर्ववदेवास्मिन् पुटान् दद्यात् पृथक् पृथक् ॥ ५५ ॥

प्रयोजनवशात्पुटपाके प्रयोज्या वनस्पतयः ।

वराशिग्रुपलाशेभकर्णभृङ्गद्रवाम्भसा ॥
अत्रोत्तरे पुनर्दद्याद्भूयसस्त्रिफलापुटान् ॥ ५६ ॥
तद्दानाद्बद्धकोष्ठस्य लोहं स्यादनुलोमनम् ॥
स्मृतः पिप्पलितोयेन मन्दाग्नेरग्निवृद्धये ॥ ५७ ॥
विदारीवारिणा क्लैब्येऽरुचौ जम्बीरवारिणा ॥
शिरीषतोयैर्वैवर्ण्ये वाते वाट्यालकाम्भसा ॥ ५८ ॥
पित्ते पर्पटतोयेन मरिचाद्राम्बुना कफे ॥
दशमूलीकषायेण सन्निपातोद्भवे गदे ॥ ५९ ॥
किराततिक्ततोयेन ज्वरेषु विषमेषु च ॥
गुडूचीवारिणा मेहेऽतिसारे कुटजाम्भसा ॥ ६० ॥
ब्रह्मयष्ट्यम्भसा श्वासे कासे वासकवारिणा ॥
काकोदुम्बरिकातोयै रक्तपित्तप्रशान्तये ॥ ६१ ॥
पाण्डुत्वे महिषीमूत्रैः कृमौ जन्तुघ्नतण्डुलैः ॥
कुष्ठे विडङ्गभल्लातैः प्लीह्नि रोहितकाम्भसा ॥ ६२ ॥
सिन्दुवारद्रवैर्मूत्राघाते शूले तुषोदकैः ॥
पामादद्रुविचर्चीषु दद्याद्दद्रुघ्नवारिणा ॥
मुशलीवारिणाऽर्शस्सु हृद्रोगेऽर्जुनवारिणा ॥ ६३ ॥
आमवातप्रशान्त्यर्थमुच्चटामूलजैर्द्रवैः ॥
सोमराजीज..............................दकैः ॥ ६४ ॥
शिलोद्भेदाम्बुनाऽश्मर्यामुदावर्ते त्रिवृज्जलैः ॥
गुल्मेऽम्लदाडिमाम्भोभिर्ब्राह्मीतोयैः स्वरक्षये ॥ ६५ ॥
वाजिगन्धाजटातोयै राजयक्ष्मनिवृत्तये ॥

लोहभस्मनः प्राशस्त्यम् ।

एवं यथास्वमन्येषां भेषजानामपि द्रवैः ॥ ६६ ॥
पिंष्यात् प्रतिपुटे चैनं शिलापट्टे गुणोत्तरे ॥
यावद्भवति सान्द्रत्वं विध्वस्तसुमनारजः ॥ ६७ ॥
किंच यद्वारिणि क्षिप्तं प्लवते राजहंसवत् ॥
तुलितं दृश्यते स्तोकं तत्प्रशंसन्ति साधवः ॥ ६८ ॥
उक्तैः पुटौषधैरेव मन्यन्ते भावनाक्रमम् ॥
अन्ये तु द्वयमिच्छन्ति प्राक्पुटं भावनां ततः ॥ ६९ ॥

विधिवत्सेवितलोहगुणाः ।

इति विविधविधानयुक्तिसिद्धं
विधिवदयः सततं निषेव्यमाणम् ॥
इदमसुरशरीरसम्भवत्वा-
दसुरबलं मनुजं करोति नूनम् ॥ ७० ॥

इति लोहसिद्धिः ॥

अभ्रकोत्पत्तिः ।

इति संसाधिते लोहे साधयेत्कृष्णमभ्रकम् ॥
यथा तथा विधिं वक्ष्ये नानागमविलोकितम् ॥ ७१ ॥
पुरा वधाय वृत्रस्य वज्रिणा वज्रमुज्झितम् ॥
विस्फुलिङ्गास्ततस्तस्य गगनं परिसर्पतः ॥ ७२ ॥
निपेतुर्मेघनिर्घोषाः शिखरेषु महीभृताम् ॥
तेभ्य एव समुत्पन्नं तत्तद्गिरिषु चाभ्रकम् ॥ ७३ ॥
तद्वज्रं वज्रजातत्वादभ्रमभ्ररयो(वो)द्भवात् ॥
गगनच्युतिजातत्वाद्रुचिरे गगनं सुराः ॥ ७४ ॥

अभ्रकभेदाः तेषां लक्षणानि च ।

विप्रक्षत्रियविट्शूद्रजातिभेदाच्चतुर्विधम् ॥
क्रमेणैव सितं रक्तं पीतं कृष्णं च वर्णतः ॥ ७५ ॥

तत्र कृष्णमुपादेयमत्र तद्धि गुणोत्तरम् ॥
तस्याप्याकरभेदेन वर्णिता विविधा विधाः ॥ ७६ ॥
तास्ताः सम्यक् प्रवक्ष्यामि तदधीना गुणा यतः ॥
इतश्चोत्तरशैलोत्थं बहुसत्त्वं गुणोत्तरम् ॥ ७७ ॥
तत्र दक्षिणशैलेऽर्कशोषादल्पगुणं हि तत् ॥
अल्पसत्त्वतया धत्ते सत्त्वे शान्तिगुणोत्तरम् ॥ ७८ ॥
शंसन्ति मुनयः सर्वे प्रयोगे कृष्णमभ्रकम् ॥

अभ्रकशोधनम् ।

तदप्यशोधितं नैव सम्यक्कर्मकरं भवेत् ॥ ७९ ॥
अतः शोधनमेवादौ वक्ष्यते तस्य शाश्वतम् ॥
आदौ सुतापितं कृत्वा गगनं सप्तधा क्षिपेत् ॥ ८० ॥
निर्गुण्डीस्वरसे सम्यग्गिरिदोषप्रशान्तये ॥

अभ्रकसत्त्वपातनविधिः ।

ततोऽम्लकाञ्जिकोपेते दग्धां दत्त्वा पुनर्नवाम् ॥ ८१ ॥
परिपिष्य शिलापृष्ठे यावत्पङ्कोपमं भवेत् ॥
ततो वन्यकरीषेण पुटान् पञ्च प्रदापयेत् ॥ ८२ ॥
निवातगर्तगर्भेऽस्मिन् वटक्षीरपरिप्लुते ॥
ततस्तच्छफरीमाषपञ्चगव्यचतुर्गुणम् ॥ ८३ ॥
पादांशटङ्कणोपेतं वटीकृत्याऽऽतपे न्यसेत् ॥
ततो विध्मापयेत् सम्यगनलेन शुचिर्नरः ॥ ८४ ॥
ततो विलोक्य तज्ज्वालां सर्वतः कनकप्रभाम् ॥
ज्ञात्वा निष्पातितं सत्त्वं विरमेद् ध्मापनात् सुधीः ॥८५॥

अभ्रकसत्त्वमारणविधिः ।

ततः सत्त्वमुपादाय किट्टं पृथग्विधाय च ॥
मारणे स्थालिकापाके पुटेऽस्मिँल्लोहवद्विधिः ॥ ८६ ॥
अथवाऽऽवर्तितं चैतदनिष्पातितसत्त्वकम् ॥ ८७ ॥

स्वाङ्गशीतमुपादाय लोहपट्टे विचूर्णयेत् ॥
ततो लौहपुटे प्रोक्तैर्भेषजैः पुटयेत् क्रमात् ॥ ८८ ॥
अथवैकदलीकृत्य ज्वलदग्नौ सुतापितम् ॥
निक्षिप्य काञ्जिकेऽत्यम्ले पिंष्यात्सान्द्रशिलातले ॥ ८९ ॥
ततः सौवीरनिष्पिष्टपौनर्नवरसे प्लुतम् ॥
बहुशः सम्प्रकुर्वीत घर्मधारणपेषणम् ॥ ९० ॥
एवं द्रवेण चाङ्गेर्यास्तण्डुलीयद्रवेण च ॥
प्लुते काञ्जिकपिष्टेन घर्मधारणपेषणम् ॥ ९१ ॥
ततोऽस्मिँल्लोहपात्रस्थे ध्माते यातेऽग्निवर्णताम् ॥
छागक्षीरं क्षिपेदूर्ध्वं पात्रे निक्षिप्य किञ्चन ॥ ९२ ॥
एवं पुनः पुनः कुर्याद्यावन्निश्चन्द्रकं भवेत् ॥
ततोऽस्मिन्नस्थिसंहाररसालश्चीतण्डुलीयकैः ॥ ९३ ॥
भेकावराहविक्रान्तामानभृङ्गयुतैः क्रमात् ॥
अम्लकाञ्जिकसम्पिष्टैः पुटा देयास्त्रयस्त्रयः ॥ ९४ ॥
उक्तैः पुटौषधैरेवं प्रदद्याद्भावनामपि ॥
नोवां[1] काञ्जिकसम्पिष्टपुनर्नवरसैर्भृते ॥ ९५ ॥
पात्रेऽहोरात्रमादध्यादेकपत्राभ्रपोट्टलीम् ॥
ततः प्रातः करोन्मर्दात्पोटलीतो द्रवान्वितम् ९६ ॥
घनं प्रच्युतमादाय विशोष्यार्कमरीचिभिः ॥
पूर्ववच्छागदुग्धेन स्थालीपाकं विधाय च ॥ ९७ ॥
पूर्वोक्तभेषजैः प्राग्वत् पुटान् दद्यात् पृथक् पृथक् ॥
एवं काञ्जिकसम्पिष्टतण्डुलीयद्रवैर्भृते ॥ ९८ ॥
पात्रेऽभ्रपोट्टलीं क्षिप्त्वा पूर्ववद्विधिमाचरेत् ॥
अथवैकदलीकृत्य गगनं पोट्टलीगतम् ॥ ९९ ॥
वटत्वक्कल्कपिण्डस्थं वटक्वाथस्थितं चिरम् ॥
उद्धृत्य वारिणा धौतं शुष्कं चण्डांशुभानुना ॥ १०० ॥

१ 'नोवा' इति निपातसमुदायः अथवेत्यर्थे ।

सधान्यपोट्टलीबद्धं करमर्दनतः स्नुतम् ॥
आदाय साधितं प्राग्वद्युज्यते सर्वकर्मणि ॥ १०१ ॥

मारिताभ्रसेवनविधिः ।

एवं विधानपरिसिद्धमनल्पवीर्यं
वज्रं भजन्ति सततं विधिना नरा ये ।
तान् वज्रसारघटितान् स्फुरितप्रकाशान्
कुर्यादिदं हि कुलिशाङ्गसमुद्भवलात् ॥ १०२ ॥

इत्यभ्रकसिद्धिः ॥

सुवर्णोत्पत्तिः ।

पुरा निजाश्रमस्थानां सप्तर्षीणां जितात्मनाम् ॥
पत्नीर्विलोक्य लावण्यलक्ष्मीसम्पन्नयौवनाः ॥ १०३ ॥
कन्दर्पदर्पविध्वस्तचेतसो जातवेदसः ॥
पतितं यद्धरापृष्ठे रेतस्तद्धेमतामियात् ॥ १०४ ॥

सुवर्णगुणाः ।

तद्धृच्यं कान्तिदं स्थैर्यमेधायुःपुष्टिवर्धनम् ॥
कषायतिक्तमधुरं पाप्मालक्ष्मीविषापहम् ॥ १०५ ॥

प्रशस्तसुवर्णलक्षणम् ।

शंसन्ति तत्कषे रक्तं मृदु भङ्गे च पीतकम् ॥
बाह्ये कुङ्कुमसङ्काशं यच्च पाकैर्न हीयते ॥ १०६ ॥

सुवर्णशोधनविधिः ।

अथ तत्खदिराङ्गारैर्ध्मातं सम्यक् प्रविद्रुतम् ॥
सप्तकृत्वः क्षिपेत्क्वाथे काञ्चनारसमुद्भवे ॥ १०७ ॥
एवं कृतस्य चैतस्य गिरिदोषः प्रशाम्यति ॥

सुवर्णमारणविधिः ।

ततो रेतितमेवैतदेतत्तुल्यं च सूतकम् ॥ १०८ ॥
सूतार्धं धातुमाक्षीकं कुनटीं माक्षिकोन्मिताम् ॥
गन्धकं सूतकोन्मानं सर्वमम्लद्रवप्लुतम् ॥ १०९ ॥

खल्वे विमर्दयेद्गाढं यावन्निश्चन्द्रकं भवेत् ॥
ततः कच्छपयन्त्रस्थं तत्पुटेत् प्रहरद्वयम् ॥ ११० ॥
स्वाङ्गशीतं समुद्धृत्य पुटेद्भूगर्तगर्भगम् ॥
काञ्जीकशिग्रुसालश्चीवराजम्बीरवारिणा ॥ १११ ॥
काञ्चनारजयाभेकाचाङ्गेरीस्वरसैः क्रमात् ॥
तदेतैरेव सूर्यांशौ प्रदद्याद्भावनामपि ॥ ११२ ॥
[1]नोवा सूक्ष्मदलीकृत्य श्वेतार्कपयसा प्लुतम् ॥
सिन्दूरकुनटीताप्यक्षोदैर्लेपितकाञ्चनम् ॥ ११३ ॥
मारयित्वा पुटैर्गर्तपुटितं पूर्वभेषजैः ॥
तैरेव साधितं प्राग्वत् सिद्धिमायाति शाश्वतीम् ॥ ११४ ॥

मारितहेमगुणाः ।

इति च सिद्धमनुद्धतकर्मभि-
विंधिवदेतदुपासितमादरात् ॥
अनलदेहसमुद्भवतोऽनलं
प्रबलवीर्यमहो तनुतेतराम् ॥ ११५ ॥

इतिहेमसिद्धिः ॥

तात्रोत्पत्तिः ।

शुक्रं यत्कार्त्तिकेयस्य पतितं धरणीतले ॥
तस्मादेव समुद्भूतं ताम्रमाहुः पुराविदः ॥ ११६ ॥

श्रेष्ठताम्रलक्षणम् ।

तच्च प्रवरं यत्तनु भङ्गे करवीरकुसुमसङ्काशम् ॥
यत्राम्लं च विपकं कथमपि हि न याति कटुभावम् ॥११७॥
श्वसपाटकादिकाकरनिकरसमुद्भूतसकलशुल्बेभ्यः ॥
नेपालदेशजातं प्रवरं तस्याधिकारोऽत्र ॥ ११८ ॥

---

१ 'नोवा' इति निपातसमुदायः अथवेत्यर्थे ।

ताम्रगुणाः ।

तद्रसे मधुरं तिक्तं कषायं लघु लेखनम् ॥
रोपणं कफपित्तघ्नं कटुपाकरसं हिमम् ॥ ११९ ॥

ताम्रसंशोधनम् ।

अथ तन्महिषीतक्रे सुचिरधृते सप्तधा विनिक्षिप्तम् ॥
सम्यग्विद्रुतमनले गतगिरिदोषं प्रशंसन्ति ॥ १२० ॥

ताम्रमारणविधिः ।

तदनु च कण्टकवेध्यं कृत्वाथ रसेन्द्रपरिलिप्तम् ॥
तावद्दिनं विधेयं यावत्तत्रोटितं त्रुटति ॥ १२१ ॥
अथ समगन्धकसूतात् कज्जलिकां मातुलिङ्गरसपिष्टाम् ॥
कृत्वा शोधनलेपं लिम्पेत् पत्रीकृते शुल्बे ॥ १२२ ॥
अथ तत्कच्छपयन्त्रे निहितं तीव्रेण वह्निना पुटितम् ॥
यामत्रये व्यतीते गृह्णीयात् स्वाङ्गसंशीतम् ॥ १२३ ॥
भवति च रसेऽतिमिष्टं न च कुरुते भक्षितं समुत्क्लेदम् ॥
तद्वदकर्मणि योग्यं विद्धि तदा साधु संसिद्धम् ॥ १२४ ॥

मारितताम्रगुणाः ।

इति वरपरिपाटीपाटवैः साधुसिद्धं
प्रतिदिवसमथैवं सेवितं धुर्यवीर्यम् ॥
अपनयति समस्तानेव रोगान् प्रवृद्धा-
ञ्जनयति ननु शक्तिं शक्तिभृत्स्वाङ्गजलात् ॥ १२५ ॥

इति ताम्रसिद्धिः ॥

एषामेकैकशो योगाः सन्ति चत्वार एव हि ॥
द्विशः षडेव चत्वारस्त्रिशश्चैकश्च सर्वशः ॥ १२६ ॥

लोहादीनां चतुर्णामेकशो योगाः ।

तत्रैकशः केवलमेव तीक्ष्णं सिद्धामृताख्यं प्रवदन्ति वैद्याः ॥
दिव्यामृताख्यं कनकामृताख्यं स्वर्णं च शुल्बामृतसंज्ञमर्कम् ॥

लोहादीनां चतुर्णां द्विशो योगाः ।

द्विशश्च तीक्ष्णाम्बुदमम्बुदार्कं
हेमाम्बुदं काञ्चनभास्करं च ॥
हेमायसाख्यं तपनायसाख्यं
समूचिरे रोगविदः पुराणाः ॥ १२८ ॥

लोहादीनां चतुर्णां त्रिशः प्रयोगाः ।

त्रिशः प्रयोगं कनकाम्बुदायसं
विदुर्बुधा भास्करवारिदायसम् ॥
हेमार्कलोहं गगनार्ककाञ्चनं
सर्वैश्च तीक्ष्णाम्बुदहेमभास्करम् ॥ १२९ ॥

एतेऽयसां पञ्चदशाभियोगा मताश्च शुद्धायसनामधेयाः ॥
रसायना रोगहराः क्रियायां यथोत्तरं तीव्रतरप्रभावाः ॥ १३० ॥

पूर्वोक्तयोगानां प्रयोगविधिः ।

अथैनमेषां विधिवत्प्रयोगं वितुल्यमध्वाज्यलवेन च प्लुतम् ॥
अयोमये लोहमयेन मर्दितं त्रिसप्तधा मर्दनमात्रमञ्चितम्॥१३१॥
ध्मातं सुधात्वेन कृताभिनन्दं सद्विप्रवैद्यार्पितमादरेण ॥
अभ्यर्चितं सत्कुसुमैश्च गुञ्जाद्वयोन्मितं मन्त्रकृताभिरक्षम्॥१३२॥
विशुद्धकोष्ठः कृतमङ्गलः शुचिर्बलिं निवेद्यार्चितदेवसद्विजः ॥
दिनेऽनुकूले कृतमन्त्ररक्षणो भजेत् सुधीः प्राशनमन्त्रमुच्चरन् १३३

अथैते मन्त्रा यथा—

उद्भवोद्भवशब्दश्च चतुर्थ्यन्तोऽमृतात्परः ॥
स्वाहान्तः प्रणवादिश्च मन्त्रोऽयं मर्दने मतः ॥ १३४ ॥
ॐ अमृतोद्भवोद्भवाय स्वाहा ॥

इति मर्दनमन्त्रः ॥

नरभेषजरक्षार्थमयमेकोद्भवं विना ॥
स्वाहापदस्य च स्थाने फट्कारेणोपलक्षितः ॥ १३५ ॥

यथा ॐ अमृतोद्भवाय फट् ॥

इति रक्षामन्त्रः ॥

प्रणवोऽथ नमश्चण्डवज्रपाणय इत्यथ ॥
ततः परं महायक्षसेनाधिपतये ततः ॥ १३६ ॥
द्विरुक्तः सुरुशब्दः स्यान्महाविद्याबलाय च ॥
ततः स्वाहेति मन्त्रोऽयं बलिकर्मणि पूजितः ॥ १३७ ॥
यथा ॐ नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये
सुरु सुरु महाविद्याबलाय स्वाहा ॥

इति बलिमन्त्रः ॥

प्रणवादमृताशब्दः सम्बुद्ध्येकत्वसाधितः ॥
ततो हूमिति मन्त्रोऽयं भेषजप्राशने मतः ॥ १३८ ॥
ॐ अमृते हूम् ॥

इति प्राशनमन्त्रः ॥

लोहयोगानां रोगविशेषादनुपानविशेषाः ।

अथौषधात् षष्टिगुणं च दुग्धं धारोष्णमर्धोदकसाधितं वा ॥
पिबेदनुष्णं त्वथ सात्म्यतो वा क्षीरोक्तमात्रं स्वरसं गुडूच्याः ॥
फलत्रिकेण क्वथितं जलं वा क्षौद्रेण वा गोजलमेव सिद्धम् ॥
तथा यथारोगहरप्रयोगनिष्क्काथकल्काम्बुनिजद्रवान् वा १४०
रास्नाम्बु वाते कफजे कणाम्बु द्राक्षाम्बु पित्ते सितयाऽनुपेयम् ॥
धात्रीजलं शर्करयाऽम्लपित्ते पित्तानिलेऽम्भो लघुपञ्चमूल्याः ॥
या पञ्चमूली महती प्रसिद्धा तया शृतं वारि कफे सवाते ॥
गदे त्रिदोषे कणया सनाथः क्वाथोऽनुपेयो दशमूलसिद्धः १४२
चिरोषितं जर्जरितस्य तोयं किराततिक्तस्य कणान्वितस्य ॥
ज्वरेऽनुपेयं प्रबलेऽतिसारे कृताञ्जलिःस्वाङ्गसमुद्भवाम्बु ॥१४३॥
रक्तातिसारे मधुनाऽनुपेयः स्वाङ्गद्रवो हिज्जलपल्लवानाम् ॥
श्रीवृक्षमाकन्दकजास्थिसारो मधुप्लुतश्छर्द्यतिसारके च ॥१४४॥

शोथातिसारे च तथा ग्रहण्यां शुण्ठीरजो वा दशमूलतोयम् ॥
सामे तथा शुण्ठ्यमृताम्बु कोष्णं पुनर्नवाम्भोऽनुपिबेच्च शोथे ॥
कृमौ च जन्तुघ्नपलाशबीजकल्कोद्भवं वारि मधुप्रगाढम् ॥
क्लैब्ये विदारीस्वरसं सिताढ्यं निजाम्बु दुर्नामनि तालमूल्याः ॥
श्वासेऽम्बु कोष्णं समविश्वभार्ग्यं वासाम्बु कासे मधुनाऽनुपेयम् ॥
पित्ते सरक्ते मधुशर्कराढ्यं सुशीतलं फल्गुफलोद्भवाम्बु ॥१४७॥
मूत्रग्रहेऽम्भस्तृणपञ्चमूल्या गुडूचिकाम्भः समधु प्रमेहे ॥
सुधायवक्षारयुतं कटूष्णमम्भोऽनुपेयं जठरामयेषु ॥ १४८ ॥
जम्बीरजं वारि रुचिप्रणाशे मन्दानले चित्रकसिद्धमम्बु ॥
शोषेऽश्वगन्धादशमूलिकाभ्यां सिद्धं पयः शर्करया सनाथम् ॥
शूलेऽम्बु लोहप्रभवे विपक्वं सवृन्तबोधिद्रुमसप्तपत्रैः ॥
सशर्करं भर्जितमुद्गतोयं छर्द्यामये लाजरजोमधुभ्याम् ॥१५०॥
स्वप्नाङ्गनासङ्गमजातधातुच्युतौ द्रवस्तालफलस्य पेयः ॥
पयोऽथवा शर्करया सनाथं वरीविदारीद्रवसाधितं च ॥१५१॥
इत्थं किलान्येष्वपि चामयेषु क्रियाक्रमज्ञानविशेषतज्ज्ञः ॥
यथायथारोगहरं गदार्तेऽनुपानमेवं स्वयमेव युञ्ज्यात् ॥ १५२ ॥

लोहसेवनानन्तरं कर्तव्यमाहारविहारादि ।

अथानुपानं प्रसमीक्ष्य कालरोगादिकान् सद्भिषजा प्रयुक्तम् ॥
पीत्वैव मुस्तां किल चर्वयित्वा पिबेत्तु कल्कं द्रवमेव तासाम् ॥
ततः समाचम्य लवङ्गपूगकर्पूरताम्बूलयुगं च जग्ध्वा ॥
आस्तीर्णशय्यातलसंनिविष्टो भजेत कामं ननु वामपार्श्वम् ॥
ताम्बूलमात्रामथ भूरि खादेन्मलानुलोमार्थमतन्द्रितोऽसौ ॥
मलाप्रवृत्तौ च पिबेत् कटू(दु)ष्णं तोयं यवक्षाररजोनुकीर्णम् ॥
एवं द्वितीये दिवसेऽपि गुञ्जाद्वयान्वितं दिव्यरसायनं तत् ॥
जग्ध्वा ततोऽन्येद्युरिदं द्विगुञ्जाप्रवृद्धमेवानुभजेद्विधिज्ञः ॥१५५

एवं दिनैकान्तरितस्य वृद्धिः कार्योऽथ गुञ्जाद्वितयेन तावत् ॥
यावच्च ता विंशतिरक्तिकाः स्युस्तदर्धमासान्नहि वृद्धिरिष्टा ॥
भजन्नितीदं शृततोयपायी जीर्णौषधो वह्निबलं विदित्वा ॥
भजेत शाल्योदनमाज्यसिद्धं सव्यञ्जनं क्षीरघृतप्रधानम् ॥१५७
सव्यञ्जनार्थं मुनयः समूचिरे मांसेषु शस्तांश्च मृगान् विहङ्गान् ॥
ग्रामोद्भवान् जाङ्गलदेशसम्भवान्
छागैणकान् तित्तिरलावकादीन् ॥
मत्स्येषु भूरीकवलाङ्गमद्गुरान्
सकृष्णमत्स्यान् सकलांश्च रोहितान् ॥ १५८ ॥
शाकेषु वार्ताकपटोलवास्तुकानभीरुवेत्राङ्कुरकासमर्दकान् ॥
पाके रसोऽम्लः किल दाडिमानां सुपक्वधात्रीफलजश्च शस्तः॥
हिङ्गूषणं सैन्धवविश्वजीरधान्यं हरिद्राऽप्यथ वेसवारे ॥
फलेषु राजादननालिकेरदाडिम्बशृङ्गाटकतालजम्भाः ॥१६०॥
द्राक्षाप्रियालान् बकुलान् सुपक्वान् मिष्टांस्तु खर्जूरकतिन्दुकांश्च ॥
विवर्जयेत् क्रोधमनोभितापहुताशशीतातपवातसेवाम् ॥१६१॥
चिन्तां निशाजागरमह्नि निद्रां वाग्विस्तरं वेगविधारणं च ॥
यामादवागूर्ध्वमपि त्रियामात्सम्भोजनं भोजनपर्ययं च १६२
उद्वर्तनस्नानविमर्दनानि स्त्रियं भयं दुःशयनासनानि ॥
इत्येवमुक्तक्रियया दिने दिने रसायनं सर्वरसायनोत्तमम् १६३
त्रिसप्तकं यावदतन्द्रितोऽथवा भजेत्ततस्तद्द्विगुणं चतुर्गुणम् ॥
लिह्याद्विडङ्गस्य रजोऽत्र किट्टप्रशान्तयेऽगस्त्यरसार्धमन्तरा ॥
एतत्क्रियातो द्विगुणोत्तरक्रिया समा प्रधानक्रिययैव कीर्त्यते ॥

विधिसेवितलोहगुणाः ।

इति वरपरिपाटीसेवितं हन्ति शूल-
ज्वरजठरगदार्शोरक्तपित्तातिसारान् ॥

श्वसनकसनमेहं कुष्ठपाण्डुत्वयक्ष्म-
श्वयथुवमथुगुल्मान् सङ्ग्रहण्यामयं च ॥ १६५ ॥
भजति यदि सदोर्ध्वं सप्तकादेकविंशा-
दिदममृतसमानं ब्रह्मचर्यं विनाऽपि ॥
वलिपलितविहीनश्चन्द्रताराकंजीवी
कनकरुचिरकान्तिर्नागवीर्यस्ततः स्यात् ॥ १६६ ॥

इति शुद्धायसविधिः ॥

अथान्यौषधमिश्राणां चतुर्णामपि चैकशः ॥
द्विशस्त्रिशः समस्तानां क्रमेण विधिरुच्यते ॥ १६७ ॥

नवायसम् ।

ततस्त्र्यूषणजन्तुघ्नवराग्निजलदाः समाः ॥
चूर्णितास्तत्समं तीक्ष्णरजो मधुघृतान्वितम् ॥
भक्षितं पाण्डुकुष्ठार्शोग्रहणीजठरार्तिनुत् ॥ १६८ ॥
अयोरजो व्योषविडङ्गचूर्णं समं लिहेन्माक्षिकसर्पिषाऽढ्यम् ॥
प्रमेहशोथोदरकामलार्शोगुल्मग्रहण्यामयपाण्डुरोगी ॥ १६९ ॥

रसगर्भायसम् ।

इष्टासुरीमन्दिरधूमधान्यवराग्निसिन्धूत्थजयाद्विभृङ्गैः ॥
भेकार्द्रकत्र्यूषणतिक्तकाण्डस्यन्दार्कभक्तासितसिन्दुवारैः १७०
शुद्धेन कर्षोन्मितसूतकेन गन्धाश्मना भृङ्गविशोधितेन ॥
कर्षोन्मितेनाक्षमितं च लोहं पुटेन सिद्धं मृदुना यथावत् ॥
तद्भक्षितं त्र्यूषणतुल्यभागं जयत्यतीसारमतिप्रवृद्धम् ॥
दुर्नामकाग्निग्रहणीविकारं शोथं च शूलं परिणामजातम् १७२

अग्निमुखं लोहम् ।

निर्गुण्डिकाग्नित्रिवृतासुधानां प्रस्थं पृथङ्मुण्डितिकायुतानाम् ॥
पक्त्वा जलेनार्मणसंमितेन पादस्थितं तद्रसमाददीत ॥ १७३ ॥

तस्मिंश्च दिव्यौषधिसिद्धरुक्मलोहात्पलद्वादशकं निदध्यात् ॥
तथा विडङ्गत्रिपलं त्रिकर्षं पृथक् पृथक् विश्वकणौषधानाम् ॥
पलं विचूर्ण्याथ पृथग्वरायाः शिलाजतुक्षोदपलद्वयं च ॥
ततश्चतुर्विंशतिमुष्टितुल्ये घृते पचेत्तन्मृदुनाऽनलेन ॥ १७५ ॥
ततः सुशीते मधुशर्कराभ्यां पलानि दत्त्वा नव सम्प्रयुक्तम् ॥
निर्णष्टमग्निं कुरुतेऽतिदीप्तमर्शांसि निर्णाशयते षडेव ॥ १७६ ॥
गुल्मोदरप्लीहविबन्धमामवातग्रहण्यामयमामशूलम् ॥
सपित्तशूलं श्वयथुं च वृद्धमष्ठीलिकापाण्डुगदप्रमेहान् ॥१७७॥
त्यजेत्करीरादिककारपूर्वं मांसं तथाऽऽनूपसमुद्भवं च ॥
विदाहि विष्टम्भि च दोषलानि भक्ष्यान्नपानानि निजाप्तबुद्धिः ॥

तदाह चर्पटिः—

( कदली कर्कटी क्रौंची कलिङ्गं कारवेल्लकम् ॥
काकमाची च कूष्माण्डं कपोतश्चेति कादिकः ॥
इमे संयोगतो दुष्टाः कुर्वन्ति विविधान् गदान् ॥
तत एतत्ककाराष्टं वर्जयेल्लोहभक्षकः ॥ )

भल्लातकलोहम् ।

वराग्निचव्याम्बुदहस्तिपिप्पलीकुठेरटिण्टूत्पलपिप्पलीजटाः ॥
गुडूच्यपामार्गयुताश्चतुष्पला द्विधाकृताभिर्द्विसहस्ररुष्कराः १७९
पक्त्वा जले द्रोणमितेऽङ्घ्रिसंस्थिते क्षिपेत्सुसिद्धादयसस्तुलार्धकम्॥
विचूर्णितत्र्यूषणकैरलीवराविडाग्निसौवर्चलसैन्धवोद्भिजान् १८०
पृथक् पलं शूरणचूर्णमानिकां चतुष्पलं चूर्णितवृद्धदारकात् ॥
तथैव संचूर्णिततालमूलकात्ततः पचेत् सर्पिषि मानिकोन्मिते ॥
सुशीतलेऽस्मिन् मधुनः पलाष्टकं क्षिपेत्ततो वह्निबलाद्यपेक्षया ॥
भजन्नयेत् कुष्ठमुदारपाण्डुतां प्रमेहमर्शोग्रहणीरुजं कृमीन् ॥

वासाद्यं लोहम् ।

वासामृतामुण्डितिकाबलावरीभार्ङ्गीसुगीतागदतालमूलिकाः ॥
त्वचो वरायाः पलपञ्चकोन्मिताः पृथग्जले द्रोणमिते पचेत्ततः ॥

विनिक्षिपेदष्टमभागशेषिते पलानि च द्वादशरुक्मलोहतः ॥
तथैव खण्डात् पलषोडशोन्मिते ततः पचेत् सर्पिषि ताम्रभाजने॥
ततो विचूर्ण्याश्मजतु त्वचं शुभामजाजिजन्तुघ्नविषाणिकाकणाः॥
सशृङ्गवेराः पलसम्मिताः पृथग्वरोषणं धान्यकपत्रकेशरम् ॥
पृथक् पलार्धं मधुसर्पिषोः पृथक् पलाष्टमाक्षिप्य विलोड्य भक्षयन्
पयोघृतप्राज्यमथाज्यसंस्कृतं भजेत भोज्यं गुरुवृष्यबृंहणम् ॥
अक्लिष्टमारक्तकरं कपोतकादिकं ककारादिकमामिषं त्यजेत् ॥
जयेदसृक्पित्तवमिं क्षयोदरे प्रमेहकासश्वयथूंश्च पाण्डुताम् ॥
सशीतपित्तानिलरक्तमुल्बणं क्लमं च शूलं परिणामसम्भवम् ॥
लभेत चोग्रां वृषतां बलं रुचिं हुताशवृद्धिं च शरीरबृंहणम् ॥

योगराजामृतम् ॥

वराग्निजन्तुघ्नकटुत्रिकाणां पृथक् पृथक् ते त्रय एव भागाः ॥
सरौप्यकिट्टादथ माक्षिकस्य तथाऽयसः पञ्च पृथग्विभागाः ॥
सिताष्टभागेन सनाथमेतच्चूर्णं जयेन्माक्षिकसम्प्रयुक्तम् ॥
पाण्ड्वामयं यक्ष्म सपित्तशूलं हृद्रोगमर्शोग्रहणीविकारम् ॥१९०॥

धात्रीलोहम् ॥

धात्री कणाव्योषरजो रजोऽयसः समं घृतक्षौद्रसितान्वितं भजन्॥
निवारयेदुद्धतकामलागदं सपाण्डुरोगं ग्रहणीगदक्रिमीन् ॥१९१

विडङ्गाद्यं लोहम् ॥

विडङ्गमुस्तत्रिफलाषडूषणैः सदारुभिस्तुल्यघृतैरयोरजः ॥
समं विपाच्याष्टगुणे गवां जले भजञ्जयेत् पाण्डुगदं सकामलम् ॥

चतुर्दशायसम् ॥

कर्पूरचित्रकशिलाजतुमुस्तवेल्ल-
तालीसनागरकणोषणनाकुलीभिः ॥
साक्षाभयामलकदर्दुरपर्णिकाभि-
स्तुल्यं रजो जयति लोहजमाशु कासम् ॥१९३॥

लोहाष्टकम् ॥

माक्षीकधातुमधुपारदलोहचूर्ण-
पथ्याशिलाजतुविडङ्गघृतानि लिह्यात् ॥
तत्सैकविंशतिमहान्यतिपूर्णधातुः
साशीतिकोऽपि रमयेदबलां युवेव ॥ १९४ ॥

धात्रीखण्डायसम् ॥

धात्रीरसेनाढकसंमितेन लोहं रजश्चाष्टपलप्रमाणम् ॥
सितासमानं कुडवोन्मिताज्ये विपाच्य तस्मिन्नथ किञ्चिदुष्णे ॥
क्षिपेद्रजो विश्वकणोषणोत्थं त्रिजातकोत्थं च फलत्रिकोत्थम् ॥
पलप्रमाणं पृथगेव शीते मधु प्रदेयं कुडवप्रमाणम् ॥ १९६ ॥
तद्भक्षयेद्वह्निबलं विदित्वा हितान्नसेवी जयति प्रसह्य ॥
चिरानुबन्धं परिणामशूलं प्लीह्नस्तु वृद्धिं जठराग्निमान्द्यम् १९७

वासाखण्डायसम् ॥

वासारसेनार्मणसंमितेन चूर्णं सितातुल्यमयःसमुत्थम् ॥
प्रस्थप्रमाणं कुडवोन्मिताज्ये पक्त्वा कदुष्णे विनिधाय तस्मिन् ॥
त्रिजातकत्र्यूषणमुस्तधान्यद्विजीरकेभ्यः परिचूर्णितेभ्यः ॥
पलं पलं दर्विकया विलोड्य शीतं युतं क्षौद्रचतुष्पलेन ॥१९९॥
लीढं जयेत् तत्प्रबलं च कासं पित्तं सरक्तं क्षयमग्निसादम् ॥
करोति पुष्टिं वपुषः प्रवृद्धिं बलं परां कान्तिमनामयत्वम् २००

दार्वीलोहम् ॥

दार्वीवराव्योषविडङ्गकृष्णाः समाः समं ताभिरयोरजश्च ॥
क्षौद्राज्यलीढं विनिहन्ति सद्यः सकामलं पाण्डुगदं नराणाम् ॥

वराद्यं लोहम् ॥

वरावरीव्योषबलाद्वयानां रजो रजो लोहसमुद्भवं च ॥
समं विलीढं मधुना घृतेन क्षयं ससैन्यं विनिहन्त्यवश्यम् ॥

तिक्ताद्यं लोहम् ॥

तिक्तानिशाचन्दनपर्पटाब्दपाठाकणादारुपटोलपत्रम् ॥
त्रायन्तिमूर्वेन्द्रयवान् किरातं विचूर्ण्य सान्द्रं च रजो विदध्यात् ॥
एतत्समं लोहरजो विधाय क्षौद्रेण साज्येन भजन् हिताशी ॥
जयेज्ज्वरान् धातुगतांश्चिरोत्थान् प्लीहानमग्नौ मृदुतां च कार्श्यम् ॥

त्रिफलायसम् ॥

धात्रीबिभीतकशिवारजसा समेन
तुल्यं रजो मधुघृताढ्यमयःसमुत्थम् ॥
लीढं जयत्यतिबलं परिणामशूलं
मन्दानलत्वमरुचिं पवनं च सामम् ॥ २०५ ॥

पथ्यायसम् ॥

पथ्यारजः सममयोरजसा विपक्वं
गोप्रस्रवे समगुडं विधिवत्प्रयुक्तम् ॥
शूलं निहन्ति परिणामसमुद्भवं त-
द्भागीरथीजलमिवातिविवृद्धमेनः ॥ २०६ ॥

वचायसम् ॥

वचामयैस्तुल्यमयोमयं रजो
विलीढमाज्येन मधूल्बणेन तत् ॥
निहन्ति शूलं परिमाणसम्भवं
बलोद्धतं कंसमिवासुरं हरिः ॥ २०७ ॥

कृष्णायसम् ॥

कृष्णाभयाचूर्णमयोरजःसमं
सिताघृतक्षौद्रचयेन संयुतम् ॥
लीढ्वाऽऽमवातं परिणामसम्भवं
शूलं तनोः पीवरतां परां जयेत् ॥ २०८ ॥

यष्ट्याद्यं लोहम् ॥

यष्टीरजो लोहरजोऽथ धात्री-
समुद्भवं चूर्णमिह प्रवृद्धम् ॥
द्विरुत्तरं सप्तदिनानि सम्य-
ग्गुडूचिकास्वाङ्गरसेन भाव्यम् ॥ २०९ ॥
ततोऽर्कसन्तापविशोषितं पुन-
र्विचूर्णितं क्षौद्रघृतान्वितं भजन् ॥
निवारयत्येव हि शूलमुल्बणं
हितान्नभोजी परिणामसम्भवम् ॥ २१० ॥

शम्बूकायसम् ॥

गोमूत्रसंशोधितलोहकिट्टात् पलं पलं मुख्यरसाञ्जनस्य ॥
पलद्वयं लोहसमुत्थचूर्णाच्छम्बूकजक्षारपलत्रयं च ॥ २११ ॥
कृत्वा सितां सर्वसमानमानां वटी निबद्धा नवमाक्षिकेण ॥
गुल्मानुदावर्तकमामवातं निहन्ति शूलं परिणामजं च ॥२१२॥

कुटजायसम् ॥

लक्ष्मीफलप्रतिविषाम्बुबलासमङ्गा-
पाठेन्द्रबीजघनशाल्मलिधातकीनाम् ॥
चूर्णैः समैः सममयः कुडवं सुसिद्धं
हैय्यङ्गवीनकुडवे गुडतुल्यमात्रम् ॥ २१३ ॥
प्रस्थत्रयप्रमितवत्सकवारिपूरे
पक्त्वा त्रिजातकपलान्वितमेतदेव ॥
शीतं युतं च मधुना कुडवोन्मितेन
हन्याच्चिरोत्थमचिरादतिसारमुग्रम् ॥ २१४ ॥

गन्धाभ्रकम् ॥

अथाभ्रकं शोधितगन्धतुल्यं करीषवह्नौ लघुना पुटेन ॥
सिद्धं भजेत्र्यूषणहिङ्गुयुक्तं यथावयोवह्निबलप्रमाणम् ॥ २१५ ॥

जयत्यतीसारमुदाररूपं हुताशमान्द्यं ग्रहणीविकारम् ॥
अर्शांसि मेहानथ पाण्डुरोगं प्लीहान्त्रवृद्धिं परिणामशूलम् ॥

सप्ताभ्रकम् ।

वरावरीवारिदवारिवीरारजःसमं तेन समाभ्रचूर्णम् ॥
क्षौद्राज्यलीढं युवतीसहस्रलीलासहत्वं कुरुते नराणाम् ॥

योगसाराभ्रकम् ।

कणाशिलोद्भेदसमानमभ्रं विलीढमाज्येन पयोऽनुपानम् ॥
निहन्ति यक्ष्माणमपि प्रवृद्धं ससैन्यमेवात्र न चित्रमस्ति ॥

त्रिनेत्रम् ।

पूर्वौषधीशोधितसूतकस्य तथैव संशोधितगन्धकस्य ॥
कर्षेण कर्षोन्मितमन्वितं खं सिद्धं यथावल्लघुना पुटेन ॥
सम्भावितं तद्बहुधा च घर्मे लज्जावतीस्वाङ्गभवद्रवेण ॥
सौवर्चलत्र्यूषणहिङ्गुयुक्तं भुक्तं वयोवह्निबलानुरूपम् ॥ २२० ॥
हरत्यतीसारमुदाररूपं ज्वरं कफोत्थं ग्रहणीविकारम् ॥
आध्मानमग्नेर्बलसादमर्शोविकारशोथानविनिद्रतां च ॥

तुरङ्गगन्धाभ्रकम् ।

तुरङ्गगन्धाक्वथिताढके द्वे चतुष्पलाज्ये कुडवद्वयाभ्रकम् ॥
निशासमं चूर्णितवानरीवरात्रिजातकाम्भोदपृथक्पलैः सह ॥
शृतं हिमं क्षौद्रपलाष्टसंयुतं पयोनुपानं च यथाग्नि भक्षितम् ॥
निहन्ति यक्ष्माणमुरःक्षतं क्षयं वायुं कृशत्वं प्रमदास्वहर्षणम् ॥

त्रिफलाभ्रकम् ।

फलत्रिकक्षोदसमानमभ्रं यदा विलीढं मधुना ससर्पिषा ॥
समासहस्रं वितनोति जीवितं विजित्य नूनं पलितं वलीयुतम् ॥

अमृतप्राशम् ।

यथोत्तमं स्वर्णरजः समानं ब्राह्मीवचाकुष्ठशिवारजश्च ॥
आयुःप्रकर्षं बलमङ्गपुष्टिं क्षौद्राज्यलीढं कुरुते शिशूनाम् ॥

प्रयोगामृतम् ।

मध्वाज्यलीढं कनकस्य चूर्णं करोति मेधां वचया नराणाम् ॥
वयःस्थिरत्वं खलु शङ्खपुष्प्या तनुश्रियं वारिजकेसरेण ॥२२६॥

हेमनवकम् ।

नवायसायःक्रियया प्रयुक्तं पाण्ड्वामयार्शोग्रहणीविकारान् ॥
नानाविषं स्थावरजङ्गमाख्यं क्षिणोति गुल्मानुदराणि शोथम् ॥

मृत्युञ्जयम् ।

गायत्रिकामन्त्रितमामलक्या रसेन लीढं कनकस्य चूर्णम् ॥
धात्रीरजस्तुल्यमिदं नराणां रिष्टं समुत्पन्नमपाकरोति ॥२२८॥

त्रिशक्तिकाञ्चनम् ।

विशुद्धगन्धाश्मपलं पलं रसात्
पलं तथा मारितशुद्धकाञ्चनात् ॥
पुटेन वह्नौ पुटितं कनीयसा
क्षौद्रेण साज्येन यथाऽग्नि भक्षितम् ॥ २२९ ॥
जयेद्ग्रहण्यामयमाशु घोर-
मर्शांस्यतीसारमुरःक्षतं च ॥
क्षयं ससैन्यं जठरं प्रवृद्धं
गुल्मान् प्रमेहानथ वह्निमान्द्यम् ॥ २३० ॥

पौष्टिकम् ।

सुवर्णचूर्णात्पलमश्वगन्धारजः समानं हविषा विलीढम् ॥
तनोति पुष्टिं वपुषः सकान्ति बलं तथाऽऽयुर्गदनाशनं च ॥

सिद्धरसायनम् ।

सुवर्णचूर्णं मधुकृष्णमोचाद्रवेण लीढं च पयोनुपानम् ॥
करोति पुष्टिं बलमिन्द्रियाणां जयेदवश्यं पलितं वलीं च ॥

त्रिफलार्कम् ।

अथार्कभस्म त्रिफलाभवेन चूर्णेन तुल्यं मधुशर्कराभ्याम् ॥
लीढं जयत्युल्बणमम्लपित्तं हुताशमान्द्यं ग्रहणीविकारम् ॥

उदयभास्करम् ।

कटुत्रिकक्षोदसमांशमर्कचूर्णं विलीढं मधुना घृतेन ॥
निहन्त्यतीसारमथाग्निमान्द्यं दोषं ग्रहण्या जठरान् सगुल्मान् ॥

त्र्यम्बकम् ।

पूर्वौषधीशोधितशुद्धसूतगन्धाश्मशुल्बानि समानि कृत्वा ॥
रसाम्बुदस्वाङ्गसमुद्भवेन द्रवेण वाऽऽप्लाव्य पुटे लघिष्ठे ॥२३४॥
सिद्धं सजीरोषणहिङ्गुयुक्तं निहन्त्यतीसारमिदं न चित्रम् ॥
एवमेकैकशो योगा भेषजान्तरयोगतः ।
विलोक्यानेकशास्त्राणि कियन्तोऽत्र प्रदर्शिताः ॥

इत्येकशो योगः ॥

अथ द्विशो योगाः ।

गगनायसम् ।

तत्र लोहगगनं पृथक् पलैः पञ्चभिर्मितमथाऽन्वितं पलैः ॥
पञ्चभिश्च रजसोऽमृतावराहस्तिकर्णकरिकेशरत्वचाम् ॥ २३६ ॥
जीवनीयघनतण्डुलीयकत्र्यूषणाग्नियवशूकसम्भवात् ॥
जीवकद्वयसुकूलकाद्धलाब्रह्मवृक्षफलविश्वगन्धकात् ॥ २३७ ॥
केरलीमधुकतालमूलिकागोस्तनीत्रिलवणात् सचन्दनात् ॥
जातिसस्यकदलीसितात्रिवृत्पिण्डखर्जुरफलात् सरोचनात् ॥
पत्रकाच्च सह चन्द्रबालिकात् पाचयेत् पयसि तत्पलाष्टके ॥
आज्यषोडशपले तदुन्मिते त्रैफलाम्भसि मृदौ हुताशने ॥
माषकोत्करनिभां यदा तदा सिद्धमेतदवतार्य पेषितम् ॥
शुद्धलोहविधिना प्रयोजितं तं तमेव कुरुते गुणोत्तरम् ॥२४०॥

चतुर्मुखम् ।

शुद्धगन्धकरसाभ्रकायसं क्षीरिसंभवरसैः परिप्लुतम् ॥
गोकरीषपुटितं लघौ पुटे सेवितं च मधुना यथाबलम् ॥२४१॥
हन्ति शोथमतिसारपाण्डुतां पक्तिशूलमुदराणि कामलाम् ॥
वह्निमार्दवमुरःक्षतक्षयं पायुजग्रहणिकामयादिकान् ॥ २४२ ॥

गगनामृतम् ।

त्वग्दलैलकरिकेशरान्वितं व्योषतुल्यमथ वारिदायसम् ॥
चूर्णितं समसितं प्रयोजितं हन्ति पायुजमथाग्निमार्दवम् ॥

गगनार्कम् ।

कुष्ठचित्रकशिवायवानिकाविश्वपिप्पलीवचाः सशर्कराः ॥
पूर्ववद्वितविभागयोजितास्तत्समाभ्रकमथार्कजं रजः ॥ २४४ ॥
साज्यमेतदवलीढमादरात् कोष्णतोयमनुपायिनोऽचिरात् ॥
हन्ति कोष्ठगतवायुजान् गदानग्निमान्द्यमथ पायुजानपि ॥

चतुःसमकम् ।

सूतगन्धकदिवाकराम्बुदास्तुल्यभागमिलिता लघौ पुटे ॥
साधितास्त्रिकटुशङ्खभस्मना तुल्यभागमिलितेन संस्थिताः ॥
योजिता घृतलवेन मर्दिताः कोष्णमम्बु पिबतोऽनु पायुजान् ॥
घ्नन्ति वह्निजडतातिसारकं पक्तिशूलमथ साममारुतम् ॥२४७॥

व्योममार्तण्डः ।

तुल्यवारिददिवाकरं समं त्र्यूषणेन सफलत्रिकेण च ॥
तुल्यभागमिलितेन सर्पिषा लीढमेतदपहन्ति पायुजान् ॥

कनकाम्बुदम् ।

जीवनीयघनवंशसेव्यकं तुल्यभागमधुना समीकृतम् ॥
तुल्यवारिदसुवर्णजं रजः साज्यमाक्षिकलवेन मर्दितम् ॥
लीढमाशु कुरुतेऽङ्गबृंहणं रोगराजमुरसः क्षतं जयेत् ॥
रक्तपित्तमथ पीनसं भ्रमं वर्णहानिमबलं च पावकम् ॥

चतुर्भुजम् ।

सूतकाम्बुदसुवर्णगन्धकं साधितं लघुपुटाग्निना समम् ॥
योजितं गदवरासमीकृतं क्षौद्रलीढमखिलान् गदान् जयेत् ॥

हेमाम्बुदम् ।

त्र्यूषणाम्बुकरिकेशरत्वचां तुल्यभागरजसा समीकृतम् ॥
हेमवारिदरजो मधुप्लुतं लीढमग्निजडतां तनोस्तथा ॥ २५३ ॥

काञ्चनार्कम् ।

जातिकाफललवङ्गपिप्पलीः शाणसंमितविभागकल्पिताः ॥
कर्षभागमितचन्द्रवालिका शुक्तिसंमितमथोषणं तथा ॥२५४॥
शृङ्गवेरकपलद्वयान्वितं सर्वसंमितमिहार्ककाञ्चनम् ॥
चूर्णमेतदखिलं समानमायोजितं च सितया निषेवितम् ॥
हन्ति कासगुदजाग्निमार्दवं श्वासगुल्ममरुचिं क्षयं ज्वरम् ॥
प्लीहवृद्धिमुदरातिसारकं छर्दनग्रहणिकामयादिकम् ॥ २५६ ॥

कनकार्कम् ।

दाडिमार्धपलमूषणाभयाशाणकं मगधजायवोद्भवम् ॥
शाणकं च गुडकं च सर्वतस्तुल्यमर्ककनकोद्भवं रजः ॥
एतदग्निबलमात्रया रजो योजितं हरति कासमुद्भवम् ॥
श्वासयक्ष्मजठराग्निमार्दवं पीनसं स्वरविघातमुल्बणम् ॥

चतुःसागरम् ।

हेमभानुरसगन्धकं समं काकमाचिसहजद्रवप्लुतम् ॥
साधितं लघुपुटे शरावके योजितं जयति सर्वमामयम् ॥

काञ्चनायसम् ।

गोस्तनीककुभवल्कवानरीबीजपिप्पलिबलाः सकर्चुराः ॥
चूर्णिताः समसिताः प्रयोजिता लोहकाञ्चनसमुद्भवं रजः ॥
सर्वतुल्यसितया प्रयोजितं वह्निकालबलमात्रया कृ(घृ)तम् ॥
हन्ति यक्ष्म सपरिग्रहं नृणां सेवया दुरितमच्युतो यथा ॥

जातरूपायसम् ।

भृङ्गपिप्पलिशुभैलवालुकं जीवनीयगणकं मुरान्वितम् ॥
चूर्णितं सममनेन संमितं जातरूपकमयश्च साधितम् ॥ २६२॥
शर्कराज्यमधुतुल्यशीलितं मात्रया हितभुजा दिने दिने ॥
वह्निनाशमरुचिं सपीनसं शोषमङ्ककृशतां नियच्छति ॥ २६३॥

हेमायसम् ।

मागधीमधुककृष्णलोचटावस्तमोदकविदारिकारजः ॥
सान्द्रचूर्णितवयःस्थयाऽन्वितं मुष्टिमानमखिलं पृथक् पृथक् ॥
हेममुष्टि कुडवोन्मितायसश्चूर्णमाज्यमधुनाऽन्वितं जयेत् ॥
स्थावरं विषमथापि जङ्गमं स्त्रीसहस्ररतमातनोति च ॥२६५॥

चतुर्भद्रम् ।

जातरूपरसगन्धकायसं तुल्यमग्निपुटितं लघौ पुटे ॥
कौङ्कुमेन रजसा समीकृतं सर्पिषा सह विलीढमादरात् ॥
यक्ष्मकासमपहन्ति हृद्रुजं रक्तपित्तगुदकीलपाण्डुताः ॥
श्वासपीनसमुरःक्षतारुचिप्लीहशूलमनलस्य मार्दवम् ॥ २६७ ॥

तपनायसम् ।

सिन्धुजन्ममिशिकेरलीरसाश्रेयसीदहनवारिदोषणात् ॥
चूर्णितात्पलमिहैकशोऽखिलैस्तुल्यभागतपनायसो रजः॥२६८॥
मिश्रितं द्विगुणभागसंमितं लीढमाज्यसहितं मिताशिनाम् ॥
कोष्णमम्बु पिबतोऽनु पायुजान् साममारुतरुजं निकृन्तति ॥

लोहभास्करम् ।

नीलनीरजसमुत्थकेशरात् पद्मकात् सह कसेरुकाद्रजः ॥
तुल्यमेभिरखिलैः समांशकं लोहभास्कररजः सितासमम् ॥
तण्डुलोदमनुपायिनां नृणां रक्तपित्तमतिदारुणं जयेत् ॥
पायुजानि रुधिरात्मकानि वा यक्ष्मपीनसमसृग्दरं तथा ॥

चातुर्भद्रम् ।

सूतलोहदिननाथगन्धकं चारटीनिजरसेन भावितम् ॥
पूर्ववत्पुटविधानसाधितं त्र्यूषणेन सह भक्षितं नरैः ॥ २७१ ॥
पक्तिशूलमुदराणि कामलां शोथमामपवनातिसारकान् ॥
वह्निमान्द्यमथ पायुकीलकं प्लीहगुल्ममपि नाशयेदिदम् ॥

इत्येते द्विकयोगा विविधौषधसिद्धयोजनया ।
उक्ताश्चात्र कियन्तो नानातन्त्रप्रमाणेन ॥ २७२ ॥

## अथ त्रिंशो योगाः ।

### हेमाम्बुदलोहम् ।

उशीरलोध्रोत्पलपद्मकेसरात् सचन्दनान्मोचरसेन युक्तात् ।
प्रियङ्गुनागोत्पलतः समं रजः परिस्रुतं सूक्ष्मतरेण वाससा ॥
समानहेमाम्बुदलोहचूर्णं समीकृतं तेन मधुप्रलीढम् ॥
विलीढमाश्वेव निहन्ति रक्तपित्तं गुदातङ्कमसृक्प्रभूतम् ॥२७५॥

### द्वितीयं हेमाम्बुदलोहम् ।

वरानिशाक्षोदसमं समांशकं हेमाम्बुदायःप्रभवं रजश्च ॥
क्षौद्रेण लीढं विनिहन्ति मेहान् ददाति पुष्टिं वपुषः श्रियं च ॥

### पञ्चभद्रकम् ।

हेमाम्बुदायोऽभ्ररसेन काञ्चनं समं निवाते पुटितं लघीयसा ॥
पुटेन भृङ्गद्वयवारिणाऽऽप्लुतं जयेद्विलीढं मधुना ससर्पिषा ॥
गुदामयं पाण्डुगदं सकामलं प्रमेहमर्शांसि च ह्याममारुतम् ॥
गदं ग्रहण्याः प्रदरास्रपित्तगदानतीसारमतीव दुस्तरम् ॥

### हेमार्कलोहम् ।

तिरीटमोचोत्पलताम्रपुष्पीपाठासमङ्गाम्बुदवत्सकानाम् ॥
समं रजोभिर्द्विगुणं समानहेमार्कलोहं मधुना प्रयोज्यम् ॥
पीत्वा ततस्तण्डुलधावनाम्भो जयत्यतीसारमुदीर्णवेगम् ॥
प्रणष्टवह्निं कुरुते प्रदीप्तं बलं वपुःकान्तिविवर्धनं च ॥

### द्वितीयं हेमार्कलोहम् ।

वचाब्दपाठातिविषाविडङ्गगदानलग्रन्थिकवारिविश्वान् ॥
समं रजस्तद्द्विगुणानि तुल्यहेमार्कलोहानि घृतेन लीढ्वा ॥
पीत्वाऽनु कोष्णं जलमेव जह्याद्दोषं ग्रहण्या गुदकीलकांश्च ॥
प्राप्नोति वह्निं वपुषः प्रकर्षमुद्दामधामोपचयोपपन्नः ॥ २८२ ॥

पञ्चसारम् ।

रसेन्द्रहेमानललोहगन्धकं समांशकं भृङ्गरसेन मूर्च्छितम् ॥
लघौ पुटे सिद्धिमुपैत्यथाज्यवन्मधुप्लुतं पथ्यभुजा निषेवितम् ॥
जयेज्ज्वरं पाण्डुमदप्रमेहानष्टोदरार्शोग्रहणीविकारान् ॥
यक्ष्माणमुग्रं परिणामशूलं हृद्रोगमाध्मानमुरःक्षतं च ॥ २८४ ॥

अर्कहेमाम्बुदम् ।

उशीरपत्तङ्गकपद्मकेशरात्सचन्दनैर्वारुकबीजकेशरात् ॥
कृताञ्जलीदारुनिशाब्दकैरवाद्रसोऽतिसान्द्रः सकलं समांशकम् ॥
समार्कहेमाम्बुदसम्भवं रजः समांशमेतेन मधु प्रयोजितम् ॥
मुखाक्षिकर्णाद्गुदरोमकूपतः प्रवृत्तमस्रं हरतेऽतिवेगितम् ॥२८६॥

अर्कलोहाभ्रकम् ।

विदारिखर्जूरदुरालभानां भृङ्गीशिवापिप्पलिगोस्तनीनाम् ॥
ससारिवाणां तु रजः समानं समार्कलोहाभ्रकचूर्णतुल्यम् ॥
निषेवितं साज्यमधु प्रगाढं यक्ष्माणमेवाशु निहन्ति सद्यः ॥
उरःक्षतं दुर्जयमग्निमान्द्यं पित्तास्रमर्शांसि च रक्तजानि ॥

पञ्चाननम् ।

लोहाभ्रगन्धारुणपारदानां समं रजो वर्तुलपर्णिकायाः ॥
द्रवेण सिक्तं लघुना पुटेन प्रसाधितं क्षौद्रघृतावगाढम् ॥
निषेवितं तद्विधिना नराणां निहन्ति पाण्डूदरशोथमेहान् ॥
हलीमकं कामलयाऽतिसारमर्शांसि कुष्ठानि च वह्निमान्द्यम् ॥

वारिदभानुहेमाः ।

कम्पिल्लपथ्याबिडशिग्रुबीजात्सवेतसाम्लाद्यवशूकजाच्च ॥
श्यामावचाशल्लकिजन्तुशत्रोस्तथा यवान्याः सममत्र चूर्णम् ॥
कर्षोन्मितं वारिदभानुहेमचूर्णं घृतेनान्वितमेव लीढ्वा ॥
कदुष्णतोयेन जयेदवश्यमष्ठीलिकां गुल्ममथामवातान् ॥२९२॥

हेमघनार्कम् ।

समुद्रपञ्चाङ्गजमत्र चूर्णं समं समं तेन च सोमराज्याः ॥
सर्वैः समं हेमघनार्कचूर्णं क्षौद्रेण लीढं विनिहन्ति कुष्ठम् ॥

पञ्चगर्भकम् ।

हेमार्कगन्धाश्मरसेन्द्रमेघाः समीकृता मन्दहुताशसिद्धाः ॥
मधुप्लुतेनाज्यलवेन लीढाः प्रोक्ताः समासादखिलामयघ्नाः ॥

इति त्रिशः प्रयोगाः ।

इत्येते विविधमुनीन्द्रगीततन्त्रा-
दुद्धृत्य प्रकटगिरा त्रिशः प्रयोगाः ॥
ज्ञानार्थं ननु गदिता भिषक्सुतानां
संक्षेपादिह भिषजा सुरेश्वरेण ॥ २९५ ॥

अथ सर्वशः प्रयोगाः ।

चतुरङ्गलोहम् ।

मरिचभृङ्गतुरङ्गसमाह्वयात्रिफलजातिफलैलवङ्गतः ॥
छदननागबलातिबलाबलावरुणवारणवीरणतो रजः ॥ २९६ ॥
सममनेन समश्व(?)समांशका जलदकाञ्चनलोहदिवाकराः ॥
समसिता असिता अथ सेविताः कमिह रोगचयं न जयन्त्यमी॥

पञ्चाङ्गलोहम् ।

अथ जलप्लुतमद्रिजमायसे विनिहितं मृदितं धृतमातपे ॥
तदनु भानुमयूखविशोषणादधिसराभमुपस्थितमूर्धतः ॥२९८॥
तदभिगृह्य खरांशुखराननादनु विशोष्य विशोष्य मुहुर्मुहुः ॥
ज्वलितकज्जलकोज्ज्वलमादराच्चपलधीर्विदधीत घनं रजः २९९
तदपरं पुनरन्यजलप्लुतं तपनतापवशाद्घनतां गतम् ॥
तदभिगृह्य च पूर्ववदर्यमत्विषि विशोष्य तदप्यथ चूर्णयेत् ॥
इति पुनः पुनरत्र शिलोद्भवे विधिमुदारमतिर्विदधीत च ॥
भवति यावदिदं जलसङ्गमाद्विगतरोगपरिग्रहविग्रहम् ॥३०१॥

स्रुतमिदं यदि वा सलिलप्लुतं घनपुटे परिपूतमनेकधा ॥
पुनरिदं मृदुपाकदशावशात्कठिनतां गतमेव विचूर्णयेत् ॥
अथ तदर्कसुवर्णघनायसां सममिदं ननु चूर्णमनेकधा ॥
क्वथितवीरतरादिवरीवराजलपरिप्लुतमातपशोषितम् ॥ ३०३ ॥
पुनरिदं परिचूर्णितमादरान्मधुघृतान्वितमेव निषेवितम् ॥
जयति शूलमथानलमार्दवं क्षयमुरःक्षतपाण्डुगुदाङ्कुरान् ॥

पञ्चामृतलोहम् ।

कनकभास्करताप्यघनायसां यदि रजस्त्रिफलाम्बुपरिप्लुतम् ॥
खरमयूखविशोषितशोषितं दलितमाज्यसितामधुयोजितम् ॥
हरति हृद्रुजमामसमीरणं क्षयमुदारमुरक्षतःपीनसम् ॥
प्रकुरुते रमणीरमणीयतां हृतहृदां सुहृदां रतिपाटवम् ॥ ३०६ ॥

षण्मुखलोहम् ।

दिनकराभ्रककाञ्चनपारदं सुरभि लोहरजश्च समांशकम् ॥
मृदुहुताशविलासवशीकृतं सघृतपुष्परसेन निषेवितम् ॥
हरति हृज्जठरामयकामलाग्रहणिकामयमामसमीरणम् ॥
गुदजमेहमथानलमार्दवं रुधिरपित्तमसृग्दरमुद्धतम् ॥ ३०८ ॥

षडङ्गलोहम् ।

गगनताप्यशिलाजतुकाञ्चना दिनकराद्यसश्च रजः समम् ॥
त्रिफलया बहुभावितमाज्यवन्मधुयुतं विनिहन्त्यखिलान् गदान्

सप्तायसम् ।

सुरभिभास्करलोहरसाभ्रकाः सजतुहेमसमुत्थरजःसमम् ३१०
वरुणकादिगणत्रिफलाजलस्नपितमातपशुष्कमनेकधा ॥
दलितमाज्यमधुप्लुतिमागतं हरति यक्ष्मगदं सपरिग्रहम् ॥
श्वसनशोथहृदामयपाण्डुताः कसनमेहमथ ग्रहणीगदम् ॥३११॥

सप्ताङ्गलोहम् ।

कनकताप्यरसाम्बुदगन्धकद्युमणिलोहरजः सममात्रकम् ॥
त्रिफलया समया मधुसर्पिषा जयति लीढमशेषमथामयम् ॥
गिरिजगन्धकताप्यरसाम्बुदद्युमणिलोहसुवर्णरजःसमम् ॥
मधुयुतेन विलीढमिदं नृणां सकलरोगचयं विनिकृन्तति ॥

इति सर्वशः प्रयोगाः ।

एतेषु दोषबलकालवयोनुरूपं
बुद्ध्या विकल्प्य सकलान्यपि भेषजानि ॥
योगप्रपञ्चनिचये रचनासु मात्रा-
वैचित्र्यमत्र विदधित विशालबुद्धिः ॥ ३१४ ॥

एतत्सुरेश्वरकवीश्वरवाग्विलास-
लावण्यधन्यपदपद्धतिसिद्धरूपम् ॥
भूयाद्भवाय विभवाय चिराय लोह-
सर्वस्वमुज्ज्वलधियां विपुलश्रिये च ॥ ३१५ ॥

इति लोहसर्वस्वं समाप्तम् ॥



## आयुर्वेदीयग्रन्थमालायां प्रसिद्धीभूता ग्रन्थाः ।

**रसप्रकाशसुधाकरः**—श्रीयशोधरविरचितः, तथा **रससंकेतकलिका**—कायस्थचामुण्डवैद्यविरचिता, एतद्ग्रन्थद्वयमेकत्र बद्धमेवोपलभ्यते । द्वितीयं संस्करणम्, मूल्यं २ रूप्यकौ.

**गदनिग्रहः**—श्रीशोढलवैद्यविरचितः । अस्य प्रयोगखण्डात्मकः प्रथमो भागः । अस्मिन् खण्डे घृततैलचूर्णगुटिकासवावलेहाख्याः षडधिकाराः सन्ति । द्वितीयं संस्करणम् । मूल्यं २ रूप्यकौ.

**गदनिग्रहस्य द्वितीयो भागः**—कायचिकित्सा-शल्य-शालाक्य-भूततन्त्र—कौमारभृत्यागदतन्त्र—रसायन—वाजीकरण-पञ्चकर्मविध्याख्य-नवखण्डात्मकः । मूल्यं ४॥ रूप्यकाः ।

**आयुर्वेदप्रकाशः**—उपाध्यायश्रीमाधवविरचितः । द्वितीयं संस्करणं, मूल्यं २ रूप्यकौ ।

**क्षेमकुतूहलं**—श्रीक्षेमशर्मविरचितः पाकशास्त्रग्रन्थः । मूल्यं १२ आणकाः ।

**रसरत्नाकरान्तर्गतश्चतुर्थो रसायनखण्डः**—श्रीनित्यनाथसिद्धविरचितः । मूल्यं ८ आणकाः ।

**राजमार्तण्डः**—श्रीभोजमहाराजविरचितः, **नाडीपरीक्षा**—श्रीरावणकृता, **वैद्यमनोरमा**—श्रीकालिदासवैद्यविरचिता, तथा **धाराकल्पः**, एतद्ग्रन्थचतुष्टयमेकत्र बद्धमेवोपलभ्यते । द्वितीयं संस्करणम् । मूल्यं १॥ रूप्यकः ।

**रसपद्धतिः**—श्रीबिन्दुविरचिता, श्रीमहादेवविरचितटीकया सहिता, तथा **लोहसर्वस्वं**—श्रीसुरेश्वरविरचितम् । एतद्ग्रन्थद्वयमेकत्र बद्धमेवोपलभ्यते । मूल्यं १॥ रूप्यकः ।

प्रापणभृतिस्तु सर्वेषां ग्राहकैरेव देया भवेत् ।

प्राप्तिस्थानम्

**वैद्य जादवजी त्रिकमजी आचार्य,**

हौलीचकला, फोर्ट—**मुंबई.**